# BENARES SANSKRIT SERIES;

A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R T H GRIFFITH, M A, C. I E
AND
G THIBAUT, Ph D
No 106

# तत्त्वशेखरः ।

श्रीभगवल्लोकाचार्यप्रणीतः ।
कारपङ्काड़-कन्दाड-वाधूल-श्रीनिवासाख्य-अयोध्यारामा-
नुजदासेन काञ्चीपुरनिवासिना संशोधितः । तथा—

## तत्त्वत्रयचुलुकसंग्रहः ।

कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचित ।
आचार्यभट्टनाथस्वामिना संशोधित ।

## TATTVAŚEKHARA

BY ŚREE LOKACHÂRYA,
Edited by K K V S A Râmânuja Dâs of Kânchi,
*And TATTVATRAYACHULUKASANGRAHA*
BY KUMARAVEDANTACHARYA ŚREE VARADAGURU,
Edited by Achârya Bhattanâthaswâmy

BENARES
*Published by the Proprietors Messrs Braj B Das & Co*
AND SOLD BY H D GUPTA
*Secretary, Chowkhamba Sanskrit Book Depot*
Printed at the Vidya Vilâs Press,
BENARES
1905

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ५ | |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा. | ० | ८ | ० |
| धर्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ५ | ० |
| लघुकौमुदीभाषाटीका | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| सांख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सांख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | १ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| हंसकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R T H GRIFFITH, M A, C I E

AND

G THIBAUT, Ph D

*No 106*

# तत्त्वशेखरः ।

श्रीभगवल्लोकाचार्यप्रणीतः ।

कारप्पङ्काड-कन्दाड-वाधूल-श्रीनिवासाख्य-अयोध्यारामा-
नुजदासेन काञ्चीपुरनिवासिना संशोधितः । तथा—

तत्त्वत्रयचुलुकसंग्रहः ।

कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः ।

आचार्यभट्टनाथस्वामिना संशोधितः ।



TATTVAŚEKHARA

BY ŚREE LOKACHARYA

Edited by K K V S A Râmanuja Dâs of Kânchî,

*And TATTVATRAYACHULUKASANGRAHA*

BY KUMARAVEDANTACHARYA ŚREE VARADAGURU,

Edited by Achârya Bhattanâthaswâmy

BENARES

*Published by the Proprietors Messrs Braj B Das & Co*

AND SOLD BY H D GUPTA

*Secretary Chowkhamba Sanskrit Book Depot*

Printed at the Vidyâ Vilâs Press

BENARES

1905

श्रीमते रामानुजाय नमः ।

श्रीलोकाचार्याय गुरवे नमः ।

श्रीमद्वेङ्कटलक्ष्मणार्यमहामुनये नमः ।

(१) श्रियः पतिः, परमकारुणिको, भगवान्, सर्वेश्वरः सर्वेषाम्पुरुषार्थानामुपादित्सितानां जिहासितानाञ्च निष्कृष्टसाधनानां त्याज्योपादेयावभासार्थम् "शमयांस्तु तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन" (दयाशत० १८)इत्युक्तरीत्या वेदान्ताख्यप्रमाणं प्रदाय श्रीरामकृष्णाद्यवतारादिमुखेन तद्विषयज्ञानञ्चोदपादयत् ('मर्यादानाञ्च लोकस्य कर्ता कारयिता च सः' रा० सु० ३५।११ "उत्सीदेयु." गी०३।२४)

(२) तच्च "नारायणात्समुत्पन्नं ज्ञानं कृतयुगे स्थितम्" इति प्रथमयुगे तथैवाऽवर्तत, ( स्का० पु०)

(३) अनन्तरम्, "किञ्चित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम्" इत्युक्तरीत्या खिले सति, "सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरःसराः । शरण्यं शरणञ्जग्मुर्नारायणमनामयम् ॥ तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात्" इत्यादिस्कान्दपुराणोक्तरीत्या तच्छास्त्रैर्ब्रह्मरुद्रादिभिरर्थितो भगवान् व्यासरूपेणाऽवतीर्य वेदानुद्धृत्य तान् विभज्य तदर्थज्ञानाय "अल्पाक्षरम्" (वायुपु० पू०५९।१२७) इत्युक्तरीत्या सूत्राणि प्रणयिष्यन् पूर्वभागवैशद्यार्थं स्वशिष्येण जैमिनिना सूत्राणां प्रणीतत्वात् तद्स्वीकृत्योत्तरभागवैशद्यार्थं ब्रह्मसूत्राणि स्वयमेव चकार ।

(४) ततः कलिसाम्राज्ये "त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय" (पा० पु० ७२।१०७)त्यादि पाद्मोत्तरवराह(७०)गारुड(३८) इत्युक्तरीत्या भगवदाज्ञापरिपालकः रुद्रः, "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते। मयैव कथितं देवि कलौ ब्राह्मणरूपिणा" इतिपाद्मोत्तरे(२३६।७)उक्तप्रकारेण "शङ्करः शङ्करः साक्षात्" इति शङ्कराचार्यरूपेणाऽवतीर्य जगन्मोहनरूपमसच्छास्त्रं प्रणीतवान् ।

(५) तेन मोमुह्यमानान् जन्तूनवलोक्य पुनः भगवता सद्धर्मस्थापनाय प्रेरितः अनन्तः स्वयमेव "अनन्तः प्रथमं रूपं लक्ष्मणस्तु ततः परम्। बलभद्रस्तृतीयस्तु कलौ कश्चिद्भविष्यति" इति नारदीयपुराणान्तर्गतपादचाचलमहात्म्योक्तप्रकारेण "ताम्रपर्णी नदी"

इति भागवतवचनोक्त(११।५)श्रीद्राविडदेशे श्रीभूतपुर्यामवतीर्य जगत्संरक्षणार्थम् व्यासप्रणीतशारीरकसूत्राणां भगवद्बोधायनप्रभृतिपूर्वाचार्याणां मतानुसारेण "वेदार्थस्य च संग्रह मृदुपद्यदान्तदीप तथा वेदान्तस्य च सारमर्थगहन श्रीभाष्यमत्यद्भुतम् । गीताभाष्यम्" च स्वयमेव प्रकाशयामास ।

(६) तथा कृतत्वेऽपि अव्युत्पन्नै अधिकर्तुमशक्यत्वात्ते च्युता एव, वेदान्तज्ञानरहितानां पुरुषाणां भगवत्प्राप्ति दुर्लभत्वात् तदवश्यं ज्ञातव्य मेव हि, तद्रहिता पशव इत्युक्तम् (नारसिं १६।१३), इत्यादिकमभिप्रेत्य सर्वशास्त्रार्थनिपुण, सकललोकोज्जीवनकाम, परमकारुणिको, भगवान् श्रीलोकाचार्य, श्रीभाष्यादिषु प्रतिपादितानर्थविशेषान् स्वदर्शनावलम्बिनामां सुखग्रहणाय सङ्गृह्य 'तत्वशेखरनामान" ग्रन्थ प्रकाशितवान् ।

(७) तच्च भाषान्तरप्रणीतत्वात् संस्कृतभाषया श्रीमदुभयवेदान्तप्रवर्तकाचार्येण श्रीगोवर्द्धनपीठाधिपतिना श्रीवाधूलकुलप्रदीपेन, श्रीकूरेशमिश्रात्मजेन, आरङ्गसूरिणा यथातथा लिखितम् ।

(८) इदञ्च द्रविडदेशे तद्भाषायामेव मुद्रितम् तथाऽपि न सम्यक् परिशोध्य मुद्रितम् ।

(९) अत्र श्रीकाञ्चीपुरनिवासिना, वाधूलश्रीनिवासपर-अयोध्यारामानुजदासेन, मया श्री० उ० वे० भूतपुरनिवासस्थश्रीरामानुजाचार्याणाम्, श्री० उ० वे० काञ्चीपुरनिवासस्थश्रीरम्यजामातृमुनीनाम् च कृपाकटाक्षविशेषै बहुकोशानवलोक्य परिशोध्य च प्रमाणाऽकरानिर्देशादिसहित लिखितम् ।

सम्पादितपुस्तकनामधेयानि एवङ्कल्पितानि ।

(क) का० श्री० उ० वे० परमहंसत्यादिरम्यजामातृमुनीनाङ्कोश द्रविडभा० द्र० अक्ष० ।

(ख) श्री० उ० प० परमहंसत्यादि यदुगिरियतिराजनारायणमुनी० तलु०

(ग) श्री० उ० वे० श्रीनगर्या आस्थानाचार्यस्य तालको० द्रा०

(घ) वा० क० वा० श्री० अ० रामानुजदासस्य मम मुद्रि० द्रा०

(ङ) वृन्दावने वानाद्रिमठाऽधिकारिणा, देवनायकस्य संस्कृतभा० ना० न० । इति ।

वा० कु० वा० श्री० अ० रामानुजदासः ।

नमः परमर्षिभ्यः ।

श्रीमते रामानुजाय नमः ।

श्रीलोकगुरवे नमः ।

श्रीभगवल्लोकाचार्यप्रणीतः

# तत्त्वशेखरः ।

## प्रथमप्रकरणम् ।

(१) पुंस्त्वशङ्केशसम्भावनागन्धविधुरस्य, प्रत्यक्षादिप्रमाणविलक्षणस्य, निखिल[1]वेदजातस्य, वेदो[2]पबृंहणस्मृतीतिहासपुराणानां च[3] कृत्यम् सकलचेतनाना[4]मपि तत्त्वज्ञानजननम् ।

(२) तत्त्वज्ञानं च सर्वस्मात्परस्य, नारायणस्य, सर्वप्रकारपरतन्त्राणां सर्वात्मनामपि स्वरूपाऽनुरूपपुरुषा[5]र्थभूतकै[6]ङ्कर्यप्रतिबन्धकर्मसम्बन्धनिवर्तकोपायः[7],

---

१ "अखिले"ति पाठान्तरम् ।

२ "तदुपबृहणे"ति पा० उपबृहण नाम अनधीतशाखान्तरार्थैः सह अधीतशाखार्थे निष्कर्ष. ।

३ "पुराणादीनामि"ति पा० तदा पाञ्चरात्रतन्त्रमपि विवक्षितम्, वक्ष्यमाणे तन्त्रस्यश्लोकस्य उदाहृतत्वात् ।

४ "सकलसंसारिचेतनानामि"ति क, ख, ग, घ. पुस्तकेषु पाठः

५ पुरुषैः अर्थितः पुरुषार्थः ।

६ किञ्चित् करोतीति किङ्कर, किङ्करस्य भावः कैङ्कर्यम् ।

७ उप ईयते अनेनेति उपाय. ।

"तच्चरणारविन्दशरणागतिः" इति ज्ञानविशेषः[1] ।

(३) नारायणः सर्वस्मात्परः कथम् इति चेत् परत्वचिह्नानि, जगत्कारणत्वमुमुक्षूपास्यत्वमोक्षप्रदत्वानि अस्यैवेति । अतोऽयमेव सर्वस्मात्परः ।

(४) महोपनिषत्[2],सुबालोपनिषत्, नारायणोपनिषत्च, स्मृती, तिहास, पुराणानि च, "एको ह वै नारायण आसीत्"(म० १।१) "दिव्यो देव एको नारायणः" (सु० ६खं०) "अथ पुरुषो ह वै नारायणोऽकामयत" (ना) "अप एव ससर्जाऽऽदौ" (मनु १।८) "नारायणो जगन्मूर्तिः" (भार०मो० १८२।१२) 'विष्णोः सकाशात उद्भूतम्"(विष्णुपु० १।१।३५) इति नारायणादि[दिव्य]शब्दैर्जगत्कारणत्वं वदन्तीति अयमेव जगत्कारणभूतः ।

(५) छान्दोग्य, वाजसनेयक, कौषीतक्याऽऽदिषु, "सत्" (छा० ६।२।१) "ब्रह्म" (बृ० ३।४।१०) "आत्मा" (ऐतरे० १।१।१) आदिशब्दैः कतिचिद्वस्तूनि कारणमिति वदन्तीति चेत् पश्वाधिकरणन्यायेन[4] सामा-

---

१ "तत्करणज्ञानविशेष" इति क, ख, ग, पा० ।

२ मुमुक्षुः मोक्षेच्छु, संसारमोचने इच्छावानिति यावत् ।

३ अङ्गारकशरगादन्तानिपादकल्पम् उपनिषत्पाठ ।

४ "पशुना यजे"त अत्र सामान्यपशुशब्द "छागो वा मन्त्रवर्णात" इति (पू० मी०६।८।३१.) इति सूत्रन्यायेन छागवि-

न्यशब्दस्य विशेषपर्यवसायितया, "सत्"आदिशब्दा अपि तमेव प्रतिपादयन्ति[1] ।

(६) ननु[2] "हिरण्यगर्भः समवर्तताऽग्रे" (यजु० ४का० २प्रश्न० ३४वा०) "धाता यथापूर्वमकल्पयत्" (तैत्ति० १।३९) "प्रजापतिः प्रजा असृजत" (यजु० २।१।१) "अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वं भुवनमधिश्रितम्"(यजु० ४।६।२) इति हिरण्यगर्भादिविशेषशब्दैर्निर्देशेन ब्रह्मणो जगत्कारणत्वे का न्यूनता इति चेत् (ब्रह्मसूत्रम् १।३।१२)तत्र वक्तुं शक्यते,"यो ब्रह्माणं विदधाति पूर्वम्" (श्वेता० ६।१८)"तत्र ब्रह्मा चतुर्मुखोऽजायत" (महो० १।२) "नारायणात् ब्रह्मा जायते" (नारा०) "स प्रजापतिरेकः पुष्करपर्णे समभवत्" (नृसिं० ताप० पूर्व० १।१) "विराजो ऽधिपूरुषः" (पुरुषसू०) "यन्नाभिपद्मात् अभवत् महात्मा

पदे यथा पर्यवस्यति, तथा "सत्" शब्दः सूक्ष्मसूक्ष्मसाधारणत्वात् 'ब्रह्म' शब्दान्तविशेष पर्यवस्यति, चेतनाऽचेतनसाधारणो 'ब्रह्म' शब्दः चेतनैकान्ता"ऽऽत्म" शब्दोक्तविशेष पर्यवस्यति, तथाऽऽत्म' शब्दश्च सर्वचेतनसाधारणः "नारायण' एव विशेष पर्यवस्यतीति वेदार्थसंग्रहे भाष्यकारैः स्फुटमुक्तम् ।

१ कारणप्रतिपादकवाक्यानामप्यर्थं सङ्गृहीतं (१३०) ।

२ अथ त्रिमूर्तिवश्याऽन्यपरत्वार्थं विमर्शं वक्तुमारभते ।

प्रजापतिः"(महो०)"वृंह वै ब्रह्माणं पुष्करे ससर्ज" (अथर्व०) "हिरण्यगर्भं पश्यति जायमानम्" (श्वेता० ४।१२) इति 'सृज्यः' इति, "न ब्रह्मा" (महो० १।१) "ब्रह्मादिषु प्रलीनेषु" (विष्णुधर्मे ७०।२०) इति, 'संहार्यः' इति, "युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं "प्राप्तवान् इति शुश्रुमः" (इतिहाससमु० ३४।८) प्राजापत्यं त्वया कर्म पूर्वं मयि निवेशितम्" (उत्तररामा० १०४।७) मम वेदा हृताः सर्वे दानवाभ्यां बलादितः" (भार० शां० मो० ३४७।३३) यस्मात्[१] निरपराधस्य शिरश्छिन्नं त्वया मम" (मात्स्ये १८२।८५) इति, 'सर्वेश्वरसमाराधनेन स्वपदं प्राप्तवान्' इति, 'असुरापहृतवेद' इति, 'रुद्रपरिभूत' इति चेमं (ममुद्दिश्य) कर्मवश्यतया (तायाः) कथनात्[२]।

(७) हिरण्यगर्भधातृप्रजापतिशब्दाः[३], अपर्यवसानवृत्त्या वा, अवयवशक्त्या वा, (नारायणप्रवृत्त्या वा,) नारायणवाचकाः ।

---

१ "तद्वे"तिमुद्रितपुराणकोशपाठः ।

२ "तत्र चक्तु शक्यत" इति पूर्वेणान्वय ।

३ सहस्रनामाध्याये (४४।५।८।श्लो०) पाठान्तरे च (२२४।म०) भगवति एते शब्दाः द्रष्टव्याः ।

(८) "अजस्य नाभावध्येकमर्पितम्" (य० ४।६।२) इत्यत्र "अर्पितम्" इति आविर्भूतमित्यर्थः "एक"-शब्दश्च पुष्करवाची "अजस्य नाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम्। पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः" (भा० शां० राजध० ४७।५८) इति माहाभारते व्याख्यातत्वात्।

(९) ननु "यदा तमस्तन्न दिवा न रात्रिः न सन्न चाऽसत् शिव एव केवलः"(श्वेता० ४।१८) "कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः शम्भुराकाशमध्ये ध्येयः (अथर्वशिखो०)इति श्वेताश्वतर-अथर्वशिखादिषु, रुद्र एव कारणभूत इति उक्तमिति चेत, तत् अपि अनुपपन्नम्, "बुद्बुदात् त्र्यक्षः शूलपाणिः पुरुषोजायत" (महो० १।३) "नारायणात् रुद्रो जायते" (नारा०) "ललाटात् क्रोधजो रुद्रो जायते" (सुबा० २) "इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमः" (बृह० ६।४।२१) "त्र्यक्षः खण्डपरशुमजीजनत् (अथर्वणो०) ब्रह्मणः पुत्राय" (साम्नि) इत्येवमादिवाक्यैः महोपनिषत्, नारायणोपनिषत्, सुबालोपनिषत्, बृहदारण्यकम्, अथर्वब्राह्मणम्, सामवेदश्च, सृज्यत्वेन, "नेशानः" (महो० १।१) इति संहार्यत्वेन' चावदत्।

(१०) शातपथब्राह्मणे,[1] "संवत्सरे कुमारोजायत, सोरोदीत् तं प्रजापतिरब्रवीत्, कुमार किं रोदिषि, यच्छ्रमात्तपसोऽधिजातोऽसीति, सोऽब्रवीत्, अनपहत पाप्माऽहमस्मीति" इत्यादिषु रुद्रोत्पत्तिदशायां रोदिति, तमीक्ष्य प्रजापतिस्त्वद्रोदनङ्किंनिमित्तमिति पृच्छति, अहमनपहतपाप्मा, अस्मत्पापानि यथा विनश्येयुः, तथा मम नामकरणङ्कर्तव्यमिति प्रतिवदति, अस्य रोदनत्वात् तत्र रुद्र इति नामाऽऽरत्वानि तस्मिन् उक्तवति, मम इतोऽपि अन्यानि च कतिचिन्नामानि स्युरिति पुनरपि अस्मिन्नुक्तवति, भवशर्वेशानपशुपतिभीमोग्रमहादेवरूपनामभक्तं, अष्टमूर्तित्वं च स तस्य दत्तवान् इत्युक्तम्[2]।

(११) इदं च, स्कन्दपुराणे "उन्मत्तवत् अनुन्मत्तः प्रभुः प्रभवतां वरः[3] । रात्रौ श्मशाने पर्यटसि तत किमेतत् तवेश्वर" इत्यादिना[4]. "श्मशानपर्यटनप्रभृतिहीनवृत्त्यनुभवहेतुः[5] कः" इति पृष्टव-

---

१ 'शातपथे चाष्टमूर्तिब्राह्मणं प्रथमांशे' इति स्तोत्रभाष्ये (२४ श्लो०)
२ एवं शतरुद्रीयब्राह्मणे, तैत्तिरीयब्रा०, बह्वृचे, भूतसूक्ते च द्रष्टव्यम्।
३ "शर्वा" इति क० ख० पा०।
४ "दिना वर्ण्याम्" क०ङ० पा०।
५ "प्रभृतिकहीनवृत्तित्वमनुभवहेतु" इति, क०,ख० पा०।

स्याम्, "अहं शोणितपङ्कालकरालवदनोऽम्बिके । रौद्रे मुहूर्ते सम्भूतो हरे रोदिमि विस्वरम्" इत्यादिना, स्वोत्पत्तिरोदननामसप्तकमूर्त्यष्टकप्राप्तिप्रकारमुक्त्वा, " रौद्रे मुहूर्ते जातोऽहं रौद्रकर्मा ततो ह्यहम् । यद्भवत्युचितं कर्म पुरुषस्य गिरेः सुते । तत् तेनाऽवश्यकर्तव्यं मृदु वा यदि वेतरत् । प्रजापतेश्च कः शक्त आदेशङ्कर्तुमन्यथा" इत्यादिना, [रुद्रः, ध्या०] स्वहीनाऽचरणहेतुः कर्म इत्युक्तवान्, इति व्याख्यातम् ।

(१२) अत्र, "हरे रोदिमि विस्वरः" "ततो मां पाणिना स्पृष्ट्वा लोकेशः प्राह केशवः " इति ' हरिकेशव'शब्दाभ्यामुपक्रम्य "प्रजापति"[१] शब्देनोपसंहारात्, अस्यां श्रुतौ[१] प्रजापतिशब्दो नारायणपर्यवसायी भवति ।

(१३) मार्कण्डेय, (५१अ) श्रीवैष्णवपुराणादि[२]षु च, (वि०१।८) "रुद्रसर्गं प्रवक्ष्यामि तन्मे निगदतः शृणु" ॥ १ ॥ इत्ययमर्थ उक्तः ।

---

१ "स्मृता' विति ड० पा० । शतपथब्राह्मण इत्यर्थः, स्मृताविति पाठे तु स्कन्दपुराण इत्यर्थः ।

२ "आदि" शब्देन, ब्रह्म (१) पाद्म (२२९) वाराह (२१४) नृसिंह (३) कौर्म (३।७।१०) वायु (२७) भागवत (३।१२) हरिवंश (१।२) भारत (मा०३५१) लिङ्ग (पू०।३६) मान (१) धादिकञ्च विवक्षितम् ।

(१४) अस्य देवस्य मीढुषः[1] " (बह्वृचे) महादेवः सर्वमेधे महात्मा हुत्वात्मानं देवदेवो बभूव "(भा० शा०राज० २०।१२) इति अस्यपदं कर्माधीनमित्युक्तम् ।

(१५) श्रीवराहपुराणे, (१३६) "तत्र विष्णोः प्रसादेन मया तत् त्रिपुरं हृतम्" ॥३४॥ "तस्य पापस्य दोषेण[2] न शक्नोमि विचेष्टितुम्"॥३५॥ इति त्रिपुरदहनजन्यपापेन योगमाया,[3] ऐश्वर्यनाश, हृदयसन्ताप, निश्चेष्टितत्वानि (अस्य) जातानीति चोक्तम् ।

(१६) "ततो वाक्यान्मुनीन्द्रस्य देवो बालेन्दुशेखरः । शङ्करश्छिन्नलिङ्गस्तु कानने विचचारह। एवं शापो यदाऽस्माकं ताभ्यां सक्तःसुदारुणः । अत्रभ्य(मृ)

---

१ "अस्य देवस्य मीढुषो वयो विष्णोरेषस्य अवभृथे हविर्भिः। विदे हि रुद्रो रुद्रियं महित्वम्" (अस्य) सर्वविलक्षणत्वेन सुप्रसिद्धस्य, (देवस्य) क्रीडाविमङ्गलगुणमहोदधेः, (मीढुषः) "मिह सेचने," सेक्तुः दातुः, उदारस्येत्यर्थः; (वयः) अवयवतया शाखाभूतः, पक्षिरतयाऽङ्गभूत इत्यर्थः, (एषस्य विष्णोः) सर्वव्यापनशीलतया सर्वान्तर्यामिभूतस्य, नारायणस्य; (एषस्य) प्रार्थनीयस्य, अभिमतफलार्थं याचनीयस्येत्यर्थः; (अवभृथे हविर्भिः) सर्वमेधाख्ये यागे, विष्णवे समर्पितैर्हविर्भिः, (रुद्रियम्) रुद्रसम्बन्धि, (महित्वम्) महिमानम्, (विदे) लेभ इति प्रसिद्धौ ।

२ "प्राप्त हृतवत्या" इति मुद्रितवराहपुराणपाठः ।

३ "प्रणष्टयोगमायश्च नष्टैश्वर्यश्च माधव" ॥३६॥

करणीयं मे तदा काष्ठमयं वपुः" इति भृगुतत्पत्न्योः शापाभ्यां, छिन्नलिङ्गत्वं, काष्ठरूपत्वञ्च जातमिति ब्राह्मपुराणे उक्तम् ।

(१७) वायव्ये, (पूर्वखण्डे३०अ०)[1] "ततो ऽभिव्याहृतो दक्षो रुद्रं सोऽभ्यशपत् पुनः । यस्मात् त्वं मत्कृते क्रूरमृषीन्व्याहृतवानसि । तस्मात्सार्द्धं सुरैर्यज्ञे न त्वां यक्ष्यन्ति वै द्विजाः ॥६३॥ कृत्वाऽऽहुतिन्तव क्रूर अपः स्पृश्यन्तु कर्मसु"[2] इति "अप उपस्पृशन्ति मेध्यत्वाय, नान्वीक्ष्येत, यदन्वीक्ष्येत, चक्षुरस्य प्रमायुं स्यात्, तस्मान्नान्वीक्ष्यः (यजु०) इति श्रुतात्रिव दक्षशापेनेज्यत्वादिनिवृत्तिरुक्ता ।

(१८) मात्स्यपुराणे, (१८२ अ०) "यस्मा दनपराधस्य शिरश्छिन्नन्त्वया मम ॥ ८५ ॥ तस्मात् शापसमायुक्तः कपाली त्वं भविष्यसि ।""विष्णुप्रसादात् सुश्रोणि कपालं तत्सहस्रधा । स्फुटितं बहुधा जातं स्वप्नलब्धं धनं यथा ॥ ९९ ॥" इति ब्रह्मशापोपहतिप्रकारः,[3] सर्वेश्वरेण तद्विमोचनप्रकारश्चोक्तौ ।

(१९) श्रीविष्णुपुराणे, (५।३३)[4] (रुद्रं) कृष्णवैभव म-

१ ब्रह्मपुराणेऽपि इमे श्लोकाः वर्तन्ते (३२अ०३५।३६)
२ "क्रूर न त्वां यक्ष्यन्ति कर्मसु" इति ब्र० पु० पाठः ।
३ "ब्रह्मणाऽस्य शापोपहतप्रकारः" इति पा० (घा)दिषु ।
४ ब्रह्मपुराणे च वर्तते (९७अ०) ।

ज्ञात्वा स्वाश्रितबाणरक्षणार्थं सपरिकरमागत्य कृष्णमभिद्रुत्य, "जृम्भाऽभिभूतस्तु हरो रथोपस्थ उपाविशत् । न शशाक तदा योद्धुं कृष्णेनाऽक्लिष्टकर्मणा ॥२॥३॥" इत्युक्तप्रकारेण स्वयं सपरिकरः पराभिभूतो रथोपस्थे निपत्य स्थितवान्, "कृष्ण कृष्ण महाबाहो[1] जाने त्वां पुरुषोत्तमम् ॥४१॥ इति पश्चात् कृष्णवैभवं ज्ञात्वा बाणस्य प्राणप्रदानार्थं[2] कृष्णं याचितवान् इति ।

श्रीविष्णुधर्मोत्तर, श्रीरामायणयोः, (बा० ७५स०) "विष्णो राधिक्य मन्विच्छन् तस्य माया विमोहितः । कृतवानस्मि देवेश देववाक्येन विग्रहम् ॥" इत्युक्तप्रकारेण भगवन्माया[3] विमोहितः कृष्णमभिद्रुत्य "आरोपितुं न मे शक्तिः सर्वयत्नेन चाऽभवत्" इत्युक्तरीत्या, भगवतो हुङ्कारेण भग्नस्वधनुः, स्वयमभिभूतः,[4] "ततश्च गतमोहेन मया ज्ञातो हरिः परः । ज्ञात्वा विष्णुचापेन स्तुतश्च भगवांस्तदा" इत्युक्तरीत्या, पश्चात् विमुक्तमोहः, भगवन्तं स्तुतवान्, इति चाऽस्याऽज्ञानाऽशक्ती चोक्ते ।

---

१ "जगन्नाथे"ति पा० ।
२ "प्राणप्रदार्थम्" इति पा० ।
३ 'परव्यामोहकारिणी शक्तिः
४ "भग्नधनुः", स्वयमपि हुङ्कारेण

(२०) "वृकासुरेऽसुमाराध्य, अहं यस्य शिरः स्पृशामि तस्य शिरः शतधा भवेत्' इति (वरं) अभिलषितवति, तस्मिन्नपि तथैवास्त्विति तस्मै वरन्दत्तवति; पश्चात् (वृकासुरे च तत्परीक्षार्थम्) "स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलाऽसुरः (वृकासुरः) । स्वहस्तं धातु मारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥२३॥ तेनोपसृष्टः सन्त्रस्त उपधावत्सवेपथुः । यावदन्तन्दिवो भूमेः काष्ठाना मधराभुवः ॥ २४ ॥" इत्युक्तप्रकारेण तस्मिन् तत्परीक्षितुं रुद्रशिर एव स्प्रष्टुमुपक्रममाणे समये तस्मिन्नपि पलायमाने सर्वत्र तमनुद्रुतवति तस्मिन्नागतो तस्मिन् श्रीवैकुण्ठ[2] मारूढुं गतवति सर्वेश्वरोऽपि अस्यक्लेशमवलोक्य मध्येऽऽगत्याऽऽविर्भूय वृकासुरमवलोक्य, असौ भ्रान्तः मिथ्या शापणं विहाय न वदति अतः स्वशिरः स्पृशन् पश्येति

१ वृकासुरमसुमाराध्य, अहं यस्य शिरः स्पृशामि तस्य शिरः शतधा भवेत्, इति संप्रार्थितवान् सं [illegible] तथास्त्वित्युक्तवान्, ततश्च "स तत् कृत्वा सुरः । स्वहस्तं शिरः । तेन वेपथुः । यावत् भुवः" इत्युक्तप्रकारेण स तत्परीक्षार्थं रुद्रशिर एव स्प्रष्टुमुपक्रममाणे शोकाभिभूतस्सन् पलायमानः, सोऽपि सर्वत्र तमनुद्रुतवान्, (ग:)मागमनात् श्रीवैकुण्ठमारूढवान् सर्वेश्वरोऽपी"ति (का)दिषु पाठः ।

२ श्रीवैकुण्ठ शब्दः [illegible], न तु परमाकाश[illegible] माऽशक्तेः एवं श्री[illegible]मिश्र ।

वदति, अनन्तरम्, सोऽपि स्वशिरः स्पृष्ट्वा पपातेति श्रीभागवते,(१०।८८) "वृकाऽसुराय गिरिशो वरन्दत्त्वाऽऽपसङ्कटम्॥१३॥" इत्यारभ्याऽस्य(रुद्रस्य), आपत्प्राप्तिप्रकारः अज्ञानाऽशक्ती चोक्ते ।

(२१) अन्धकासुरं निरसितुं मातृगणान् सृष्ट्वा, "त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै। नृसिंहमूर्तिं देवेशं प्रदध्यौ भगवान् शिवः ॥१३॥" इति तेन (त्रैलोक्य)पीडां प्राप्स्यति, स्वतस्तच्छिमनाऽशक्तत्वात् सर्वेश्वरन्ध्यायति, सतं शमितवान् इति मात्स्यपुराणे (१७८) अस्य (रुद्रस्य) अज्ञानाऽशक्ती उक्ते ।

(२२) तथाचैवम्, सृज्यत्व, संहार्यत्व, कर्मवश्यत्वाना मुक्तत्वात् अस्य कारणत्वं न घटते ।

(२३) तस्मात्, हिरण्यगर्भादिशब्दा इव शिवशम्भ्वादिशब्दाश्च नारायणपराः ।

(२४) "शिव" इति सर्वप्रकारशुद्ध इत्यर्थः ।

(२५) "शिव" शब्दः 'शिवमस्तु सर्वजगताम्" शिवास्ते सन्तु पन्थानः" "शिवङ्कर्माऽस्तु" इति शुद्धमाङ्गल्यगुणविशिष्टवस्तुषु प्रयुक्तः ।

(२६) "शम्भुः" इति "शं सुखं भावयतीति, शम्भुः" इति

१ सहस्रनामभाष्ये, ३८ना०।

व्युत्पत्त्या सर्वसुखप्रद इत्यर्थः ।

(२७) "शम्भुः" इति द्रुहिणविषयेऽपि प्रयुक्तः[१] ।

(२८) "सर्वः शर्वः शिवः स्थाणुः" (सह०४) "स्वयं-
म्भुः शम्भु रादित्यः" (स०५) इति गुणविवक्ष-
या[३] एते शब्दाः नारायणे प्रयुक्ताः ।

(२९) "यानि नामानि गौणानि" (स०१३) इत्युक्तेः,
एते शब्दाः यौगिकाः ।

(३०) नारायण शब्दस्तु नैवं रुद्रं वक्तुं शक्नोति ।

(३१) अयं शब्दः बहुपूपनिषत्सु बहुवारं प्रयुक्तः ।

(३२) शिवशब्दस्य तु तन्न ।

(३३) ननु, "ब्रह्म विष्णुरुद्रेन्द्र आस्ते सर्वे सम्प्रसूयन्ते"
(अथर्वशि०) इति ब्रह्मरुद्रेन्द्रैः सह (साकं) नारा-
यणोऽपि प्रसूत इति, श्रीरामायण, (उत्तररा०५१)
लैङ्गादि[४](पूर्व०१९अ०२६श्लो०) पुराणेषु च भृगु-
शापात् अस्य दुःखानुभवो जातः इति चोक्तत्वात्
अस्याऽपि कर्मवश्यत्वमस्तीति चेत्, तन्न वक्तुं श-

---

१ "शम्भुः स्वयम्भुर्द्रुहिण" इति नामपाठः नारदीयपुराणे रुक्मा-
ङ्गदचरितेयमवचनेषद्रष्ट० ।

२ "शम्भुरपि हिरण्यगर्भविषयशब्दसहस्र." इति (ङ) पु० पा० ।

३ "विवक्षायामि"ति (ङ०) पा० ।

४ "आदि" पदेन, मात्स्य, (४७।१०२) वायु (उत्तर२०।३५।६४) प्रभृ-
तिकं विवक्षितम् ।

क्यते, "ब्रह्म विष्णु रुद्रेन्द्र आस्ते" (अथ०) इत्यत्राऽयन्तात्विव जात इति नोच्यते, किन्तु, "रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्" (भार० उद्यो० १२।११ रामा० उ का० ८५।१८) इत्युक्तरीत्या, राघव यादव साजात्य मिव ब्रह्म रुद्रसाजात्यः सन् विष्णुरूपेणाऽवतीर्णप्रकार उच्यते।

(३४) "अजायमानो बहुधा विजायते" (यजु० आरण्य० ३।१२) इति श्रुतिरेवाऽस्य कर्ममूलकजन्म निषिध्यै च्छिकजन्म विधयत्ते।

(३५) "एष सर्वभूतान्तरात्मा अपहतपाप्मा" (सुबा० ७ खं०) "स एष सर्वेभ्यः पाप्मभ्य उदितः" (छा० १।६।७) "यस्य देवस्य माहात्म्यं महिमानञ्च नारद। शुभाऽशुभैः कर्मभिर्योनलिप्येत कदाचन" (भा० शां० मो० ३३९।२६) "स सर्वभूतप्रकृतिं (विकारान्)" वि० पु० ६।५।८२, मत्स्यपु० च० १२४।६३) "शुभाऽशुभैर्विनिर्मुक्तः ऊर्मिषट्कात[1] पर[:]प्रभुः। तं चैव ममलं विष्णुं सदा ध्यायन् विमुच्यते" (नारसिंहपु० १७।२३) इति, अपमकर्मवश्य उक्तः।

---

१ "अशनायापिपासाशोक मोह जरामरणानि इति षडूर्मयः" इति मुद्गलोपनिषत् श्रुतिः।

(३६) "सर्वावस्थेषु[1] वै विष्णोः जननं स्वेच्छयैव तु॥४०॥ जरकारुच्छलेनैव स्वेच्छया गमनं हरेः ॥४८॥ (द्विजशापात् च्छलेनैव मवतीर्णोऽपि लीलया)" इत्यादिना लैङ्गादिषु, भगवदवतार ऐच्छिक उक्तः ।

(३७) श्रीविष्णुपुराणे "देवतिर्यङ्मनुष्यादि शरीर ग्रहणादिमका॥ लीलेयं सर्वभूतस्य तव चेष्टोपलक्षणा"[2] (वि०पु० ५।३३।४२) "नाकारणा त्कारणाद्वा कारणा करणं नच । शरीरग्रहणव्यापिन् धर्मत्राणाय केवलम्" (५।२।५०) "इच्छा गृहीताऽभिमतोरुदेहः"[3] (६।५।८४) "समस्तशक्तिरूपाणि तत् करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्तः स्वलीलया ॥७०॥ जगतामुपकाराय न सा कर्म निमित्तजा" (६।७) इति, जगद्रक्षणार्थ इच्छयाऽवतरति, ऋषिशापं सर्वमर्यादास्थापनाय स्वय मनुवर्तत, इत्युक्तः ।

---

१ "सर्वारसासु, सर्वावर्षेषु" इति च पा० (मार्कण्डेय(४) ब्रह्म (७२) गारुड(२०) भारतादिकं विवक्षितम् ।

२ "आदि"पदेन, मात्स्य, (४७अ०) वायु (उत्त०३४।३६।४२अ०) पाद्मोत्तर (२४२) भागवत (१०।१) विष्णुधर्म (६७) ।

३ ब्रह्म० व० ९७४१ ।

४ ,, ,, १२४।६४

(३८) "अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वा मधिष्ठाय सम्भवा म्यात्ममायया ॥६॥ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थान मधर्मस्य तदाऽऽत्मानं सृजा म्यहम् ॥७॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥८॥ जन्मकर्म च मे दिव्यम्" (गी०४ अ०) इति स्वयमेवोक्तवान्[1]।

(३९) [तस्मात् नाऽयं कर्मवश्यः[1]।

(४०) ननु, पुत्रार्थितया कैलासे गत्वा रुद्रं याचयित्वा तस्मै पुत्र मपेक्षितवान्, सोऽपिदत्तः (वान्) इति महाभारते[2] ऽभिधानात् नारायणोऽपि कर्मवश्यः रुद्रस्य शरणभूत इतिचेत्, तत्रोक्ताऽर्चनादिकं, नकर्मवश्यत्वादिसूचकम् (अपितु वरप्रदानकृतम्, "अन्यन्देव वरन्देहि प्रसिद्धं सर्वजन्तुषु ॥४१॥ मर्त्यो भूत्वा भवान् देव माम् आराधयकेशव मां भजस्व च देवेश वरम्मत्तो ग्रहाणच ॥४२॥ येना-

१ गीतायामिति वक्तव्ये तथाऽनुक्तिः, श्रीविष्णुधर्मेऽपि (६८) (इमानि वचनानि) ग्रह्मायाम्प्रति स्वयमेवोक्तत्वात।
२ (३९) इत्यारभ्य, (४१) इत्यन्तम् (घ ङ) पुस्तकयोर्नास्ति।
३ हरिवं० भवि० ८८अ०।

ऽहं सर्वभूतानां पूज्यात् पूज्यतरो भवम्" इति रुद्रो ऽपोक्षितवान्, "देवकार्यावतारेषु मनुष्यत्वमुपेयिवान् । त्वामेवाऽऽराधयिष्यामि हर त्वं वरदो भव ॥४३॥" इति, सर्वेश्वरोऽपि (तस्मै) वरन्दत्तः (वान्), इति श्रीवराहपुराणे (७३ अ०) ह्युक्तम् ।

(४१) पुत्रप्रदानानन्तरं रुद्रेण, देवान् ऋषींश्च दृष्ट्वा,[1] कृष्णः जगन्मोहनार्थम्पुत्रार्थितयाऽऽगतः (इति) अयमेव सर्वकारणभूतः, सर्वस्मात्परः, मोक्षप्रदश्च, इम मेवोपास्य यथा मुक्ता भवेत तथाकुरुध्वम्, इति उपदिष्टत्वात्, अस्य परत्वस्य बहुमुखैः स्तुतत्वात्, पुत्रार्थमितरपादौ(दयोः) पतितकृष्णस्यैव मार्गे घण्टाकर्णस्य मोक्षप्रदत्वाच्चाऽस्य कर्मवश्यत्वं नास्ति।

(४२) लैङ्गादि[2] पुराणेषु, क्षेत्र प्रकृति योनि शक्ति माया, शब्दैः रुद्रं प्रत्युक्तो नारायणभावः, रुद्रात् उत्पत्तिः, मूर्तित्रयाऽतीतसदाशिवपारम्यप्रभृतिकम्, प्रत्यक्षश्रुतिविरोधात्,[3] स्वग्रन्थपरस्पर विरोधात्,[4] "अग्नेः

---

१ हरि० भ० ८८, ८९ अ० । २ "आदि" वायुकौर्मादिकक्षविपक्षितम, तत्रापि तथोक्तेः । ३ महोपनिषत् सुबा०, नारायणो०, बृहदारण्य, शतपथ०, शैलालि० शतरुद्री० इत्यादि ।

४ तदेव क्वचित् (३६।७) नारायणात् रुद्रोत्पात ,नारायणापृथक्कारण भूत (पृ० २४) इति क्वचित्तस्मात् लैङ्गादिषु परस्परव्याघातः सर्वत्र दृश्यते भूषण टीकायां मया विस्तरेण प्रदर्शितः ।

शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते" (मात्स्य० ५।३।६८) इत्युक्तप्रकारेण तत्तामसपुराण सिद्धत्वाच्च भ्रान्तिपरिकल्पितम्[1] ।

(४३) ब्रह्म रुद्रयोरपि जन्मनी स्वेच्छयैव स्यातामिति चेत्, तन्न वक्तुं शक्यते, "आ ब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनिताः संसारवशवर्तिनः" (विष्व० १०४।२३) "विष्णोर्माया महावर्ते मोहान्धतमसावृताः"(वि०पु०५।३०।१७) इतीमौ कर्मपरतन्त्राविति उक्तत्वात् ।

(४४) एवं, नारायण एव कारणभूत इत्यस्याऽर्थस्य, न्यायाऽनपेक्षं अनन्तशाखा निखिलवेद निगमनभूत', उपासनविधिविधुरः,[1] समस्तपरविद्योपास्य विशेष निर्णायक (:) निखिलवेदान्त निर्वाहकः, नारायणाऽनुवाकः, सर्वेषु अपि वेदान्तेषु, "परब्रह्म" "परन्तत्त्व" "परमात्म" "परञ्ज्योति" "परायण" "पुरुष" "अक्षर" "अच्युत" "विश्वाऽऽत्म"

---

१ तामस पुराणमित्युक्तत्वात् हेतो "तामसं निरयप्रदम्" इति पाद्मात्, 'तमस्त्वज्ञानजं विद्धि' इति गीता ।

२ पद्मपुराणवचनेन (९४।१४) "ब्रह्म वा साक्षान्महेशो वा मनुष्याः परवशास्तथा" इत्यादि पूर्वार्द्धम् ।

३ "लिङ्गभूयस्त्वाधिकरण (३।३।४३) द्रष्टव्यम्

"शिव" "शम्भु" शब्दैः, निर्दिष्टं वस्तु तत्तत् शब्दैरनूद्य "नारायण" इति विशेषितत्वात् "सब्रह्मा सशिवः सेन्द्रः" (तै० ना० ११।२६) इति कार्यत्वेन सम्प्रतिपन्नेनेन्द्रेण सह ब्रह्मरुद्रैः (द्वौ) पठित्वा अस्य कार्यभूताविति चोक्तौ ।

(४५) तथा चैवं, न्यायस्वभावात्, न्यायनिरपेक्षं श्रुतिष्वेव विशेषितत्वात्, "सनोहरिः" इति हरिशब्देनो पसंहारात् ब्रह्मरुद्रयोः सृज्यत्व, संहार्यत्व, कर्मवश्यत्वोक्तेश्च, नारायणएव कारणभूतः ।

(४६) "येन जातानि जीवन्ति" (तै० भृ० १।१) "एष भूतपालः" (बृह० ६।४।२२) "परित्राणाय साधूनाम् (विष्णुधर्मे ६८।३४) "नहि पालनसामर्थ्यमृते सर्वेश्वरस्य[1] हरिम्" (वि० पु० १।२२।१९) "सएव पाति" (वि० पु० १।२।६७) इत्युक्तप्रकारेण, स्थापकोऽप्ययमेव ।

(४७) "यत् प्रयन्ति अभिसंविशन्ति" (तै० भृ० १।१) "येनेदंविश्वं परिभूतं यदस्ति" "यस्य ब्रह्मचक्षत्र मुभे भवत ओदनं(:)मृत्युर्यस्यो पसेचनम्" (कठो० १।२।२५)" असेत् संहारसमये जगदौदुम्बराण्ड-

---

१ सर्वेषां ब्रह्मरुद्रादीनामीशः, तम् ।

वेत् । लीलया यस्तु भगवान् तं गच्छशरणं हरिम्" "सम्भक्षयित्वा" (वि० पु० १।२।६२) इत्युक्तरीत्या, संहारकोऽपि अयमेव ।

(४८) ननु, रुद्र एव संहर्ता इति उभयत्रादिसम्प्रतिपत्तावपि अयमेव संहर्ते त्युक्तिः कथमितिचेत्, "कल्पान्ते रुद्ररूपीयोग्रसते सकलञ्जगत् । त मन्तम्पुरपं [1]विष्णुं प्रणतोऽस्मि जनार्दनम्" (विष्णुधर्मे ७१।५२) "सृष्टि स्थित्यन्त करणीं ब्रह्म विष्णु शिवात्मिकाम्" (वि०पु०१।२।६६) "स एव सृज्यः स चसर्गकर्ता [illegible] एव पात्यत्ति च पाल्यतेच" (वि० पु० १।२।६७) इत्युक्तरीत्या, रुद्रान्तर्यामी भूत्वा[2] अयमेव संहरति ।

(४९) तस्मात् अयमेव जगज्जन्मादि करणभूतः ।

प्रथमप्रकरणम् समाप्तम् ।



---

१ ननु अस्मिन् श्लोके त्रिमूर्तिसाम्यं हि प्रतीयते इति चेन्न, "एक एव जनार्दन" इति जनार्दनस्यैव ब्रह्मशिवादि कृत्स्नप्रपञ्चतादात्म्य प्रतिपादनात् "जगत्स" इति पूर्वोक्तमेवविवृणोति ।

२ "रुद्ररूपीभूत्वे"ति ।

## द्वितीयप्रकरणम् ॥

(१) "यतो वा इमानि भूतानि जायन्ते, तद्विजिज्ञासस्व" (तै०भृ०१।१) "असद्वा इदमग्र आसीत्" (तै०आन०७।१) "रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" (तै०आ ७।१) "तमेवं विद्वान् अमृत इह भवति" (महानारा०३ अ०) "भिद्यते हृदयग्रन्थिः" (मुण्ड०२।२।९) "त्वामाराध्य परंब्रह्म याता मुक्तिम्मुमुक्षवः। वासुदेव मनाराध्य कोमोक्षं समवाप्नुयात्" (वि०पु०१।४।१८) "संसारार्णवमग्नानां विषयाक्रान्त चेतसाम्। विष्णुपोतं विना नान्यत् किञ्चिदस्ति परायणम्" (वि०ध०१।५९) "संसारसागरं घोरम्"[1] (जितन्ता०१।४) "समस्तजगतो मूले यस्य भक्तिः स्थिरात्वयि। धर्मोऽर्थकामैः किन्तस्य मुक्ति स्तस्यकरे स्थिता" (वि०पु०१।२०।२६) इत्यादिना, कारणवस्त्वैवोपास्यं, मोक्षप्रदं, मुक्तप्राप्यं, इत्युक्त्वा, मुमुक्षूपास्यः[2] मोक्षप्रदः मुक्तप्राप्यश्चाऽयमेव ।

१ "अनन्तक्लेशभाजनम् । त्वा मेव शरणमप्राप्यानिस्तरन्ति मनीषिणः" इत्यन्तम (ङ) पुस्तके।

२ भाग० १।२।२६ "मुमुक्षवो घोररूपान्" इत्यादि ।

(२) [1]ननु, छान्दोग्यदहरविद्यायाम्, तैत्तरीय दहरविद्यायाम्, बृहदारण्ये, अथर्वशिखायाञ्च, "दहरोऽस्मिन्नन्तर आकाश स्तस्मिन्यदन्तरस्तत् अन्वेष्टव्यम्" (अ०८।१।१) इति, "गगनं विशोकस्तस्मिन् यदन्तः तदुपासितव्यम्" (तै०१०।२३) इति, "य एषोऽन्तर्हृदय आकाशः, तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः" (बृ० ६।४।२२) इति, "शम्भुराकाशमध्ये ध्येयः" (अथ०) इति च, आकाश शब्देन नारायण मुक्त्वा, तदुपरि शम्भुशिवज्ञानशब्दैः रुद्र उपास्य उक्तः "सर्वाणि रूपाणि विचिन्त्य धीरः" (पुरुषसू०) इति, नारायणाऽसाधारण नाम रूपकर्तृत्वस्य, "आकाशो ह्वै नामरूपयोर्निर्वहिता" (छा०८।१४।१) इत्युक्तरीत्या, छान्दोग्य दहरविद्यायां, आकाशशब्दो नारायणपरः तदैकार्थ्यात् अन्यत्रापि, आकाश गगनशब्दौ नारायणपरौ अथर्वशिरसि, खण्डचतुष्टयेन, रुद्रस्य सर्वैश्वर्य मुक्त्वा, पञ्चमखण्डेन "तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिः शाश्वती" इति हृद-

१ अथ व्योमातीनमतं समूलमुन्मूलयितुमस्तत्परिपाटीमुपन्यस्यति, (पू० सू० ३।३।३०)।

यान्तर्वर्तिनो रुद्रस्य उपासनस्य (तस्य) फलं, मोक्ष इति, अस्याऽर्थस्य, "भस्मम् गृहीत्वा विमृज्याऽङ्गानि संस्पृशेत् तस्मात् व्रत मेतत् पाशुपतम् पशुपाशविमोक्षाये"ति पाशुपतव्रतस्य चोक्तः उपास्यत्वं मोक्षप्रदत्वञ्च कण्ठोक्तम् श्वेताश्वतरोपनिषदिच, "ततो यदुत्तरतरम्" (३०।१०) इति नारायणात् परत्वं "यएनं विदुरमृता स्ते भवन्ति" (३।१०) इति, मोक्षप्रदत्वञ्चोक्तम्, "तस्मात् सर्वगतः शिवः" (३।११) इत्युक्तेः एतत् (प्रकरणम्) रुद्र परमिति सिद्धम् "रुद्रस्तारकं ब्रह्म व्याचष्टे तेनाऽसौ अमृती भूत्वा मोक्षी भवति" (१ खं१ब्रा०) इति, जाबालि श्रुत्याऽपि मोक्षप्रदत्वं कण्ठोक्तम् श्रीरुद्र, त्वरितरुद्र, पञ्चब्रह्म(म)तन्त्रैरपि रुद्रैभत्र मुक्तम् तस्मात् रुद्रएवो पास्यः, मोक्षप्रदश्चेति वक्तव्य मितिचेत्, इदमनुपपन्नम्, छान्दोग्यदहरविद्यायां, "किन्तत्र विद्यते यदन्वेष्टव्यम्" (८।१।२) इति श्रुतिरेव चोद्यङ्कृत्वा "तस्मिन् कामाः समाहिताः" एषआत्मा अपहतपाप्मा" (८।१।५) इत्यादिना, दहराकाशे उपास्यतयोक्तम् अपहतपाप्मत्वादिगुणमिति समाधत्ते, तैत्तरीयदहरविद्या वाक्यमपि एतत् ऐकार्थ्यम्, "यः"(तै १०।२४)इति,

अकारवाच्य बोधकत्वात्, "महेश्वर" शब्दोऽवयव शक्त्या सर्वनियन्तारं नारायणं वक्ति "अकारोविष्णुवाचकः" इत्युक्तेः, अकारवाच्यो नारायण[1] एव, बृहदारण्ये, अथर्वशिखायाञ्च, प्रयुक्त आकशशब्दः, नपरमपुरुषपरः, किन्तु सर्वप्रसिद्ध आकाशपरः (एव) दहराकाशादिष्विव पुरुषोत्तमाऽसाधरण धर्माऽश्रवणात्, अत्रे शान शम्भु शिवशब्दाः, वशित्व जगत्कारणत्वादि परमात्माऽसाधारण सम्बन्धात् "ईशानः प्राणदःप्राणः" (सह० ८) "स्वयम्भुःशम्भुः" (स० ५) "सर्वः शर्वः शिवः" (स० ४) इत्येतैः शब्दैः, पर्यायाः, "कारणन्तु ध्येयः" (अथ० शिखा०) इतिवाक्यम् कारणत्वं, ध्येयत्व मित्येतत् द्वयं नविधत्ते, किन्तु ध्यानम् (विधीयते) उभयविधाने वाक्यभेदप्रसङ्गः अनुवाददशायाम् अन्यतः प्रसिद्धस्यैव अनुवाद्यत्वात्, कारणवाक्येषु कारणतयोक्तं नारायण मनूद्य तत् ध्यानं विधत्ते, अथर्वशिरसि, प्रथमखण्डे, "अहमेकः प्रथम मासं वर्तामिच भविष्यामिच नान्यः कश्चिन्मत्तो व्यतिरिक्तः"

---

१ "योहवै श्रीपरमात्मा नारायणः सभगवान् अकारवाच्यः" इति तारसारोपनिषदि असकृदाम्नातम "अइति भगवतोनारायणस्य प्रथमाऽभिधानम्" इति महाभाष्यकृत् ।

इत्यादिभिः रुद्रस्य विश्वैश्वर्योक्तिः, "मत्तः सर्वं अहं सर्वम्" (वि॰पु॰ १।१९।८५) अहम्मनुः अभवं सूर्यश्च" (बृ॰उप॰ ३।४।१०) "प्राणोऽस्मि प्रज्ञात्मा तम्मा मायु रमृत मित्युपास्व" (कौषी॰३।१) इति प्रह्लाद वामदेवे,न्द्रादीनामिव परमात्मभावनाप्रकर्षबलादिति। इममर्थं "सोऽन्तरात् अन्तरं प्राविशत्" (अथ॰ १) इति श्रुतिरेवाऽवदत्, द्वितीयखण्डोक्त देववाक्यम्, रुद्रवाक्याऽनुवादकत्वात् तद्वाक्यतुल्यम्, तृतीय चतुर्थखण्डयोः, ओङ्कारादिप्रणवनामानि, तन्निर्वचनानि चोच्यन्ते तस्मात् न रुद्रपरास्तेशब्दाः, किन्तु प्रणववाच्यनारायणपराः, पञ्चमखण्डोक्त रुद्रोपासनं मधुविद्योक्ताऽऽदित्योपासनवत् परमात्मोपासनम्, अत्रोक्तभस्मस्पर्शनस्य सौत्रा मण्युक्त सुराग्रहस्य सर्वक्रतुसाधारण्याऽभाववत् नसर्वोपासनसाधारण्यम्।

(३) छान्दोग्यादिषु, "असदेवेदमग्र आसीत्" (छा॰ ६।२।१) इत्यादिभिः, परमतोपन्यासकरणवत् अत्राऽपि परमतोपन्यासः क्रियते।

(४) लैङ्गे, नमस्त्वादि धर्माङ्गतयोक्तेः, अथर्वशिर उक्त

---

१ छान्दोग्योप॰ ३।१।१, ब्रं॰ सू॰ १।३ ३० "मध्वधिकरणे।

मन्त्राणां भस्मोद्धूलने विनियोगात् (विनियुज्यमानत्वात्) अथर्वशिरोलैङ्ग्यो रुक्तस्य पाशुपतव्रतस्यैक्यात्, "अर्द्धे दशार्द्धसंयुक्तं गूढं प्राज्ञविनिन्दितम् । वर्णाश्रमकृतैर्धर्मैः विपरीतं क्वचित्समम्" इति लैङ्ग एव अवैदिकतयोक्तः, अथर्वशिरसि अधिकारि (र) श्रवणेनाऽविशेषेण सर्वाधिकारत्वप्राप्तौ श्रीवराहपुराण-आदित्यपुराणयोः वेदबाह्याऽधिकारत्वेन सङ्कोचा(चना)त्, "भस्मच्छन्नो भस्मशय्याशयानः" (शाता० प्रायश्चि० अ०) इति, शातातपे धर्मशास्त्रे (च) महापातकनिवर्तकतयोक्तभस्मोद्धूलनं प्रायश्चित्तविषयत्वात, लोकप्रसिद्धेश्च, अवैदिकमिति केचित्[2] ऊचुः ।

(५) श्वेताश्वतरे, नारायणात् परत्वं, मोक्षप्रदत्वञ्चोच्यत इत्येतत् अपि अनुपपन्नम्, "वेदाह मेतम्" (३।८) इत्यारभ्य, "नान्यः पन्था" इति महापुरुषवेदनमेव मोक्षसाधनं, तदतिरिक्त उपायो नास्ति इति कृत्वा, "यस्मात् परं नाऽपरमि" (३।९) त्यादिना,

---

१ पा० पु० ७१ अ०, पाद्मो० ख, २९५ अ०, मार्द्दस्मृ० ७ अ० वासिष्ठस्मृ० १ हारीत० ८ अ० ।

२ कश्चित् आचार्याः इत्यर्थः ।

प्रस्तुत (महा) पुरुष एव परः, तत् व्यतिरिक्ताः सर्वेऽप्यपराः इत्युक्त्वाऽनन्तर मन्यत्, किञ्चित् वस्तु परं, मोक्षप्रदञ्चेत्युक्तेः प्रतिज्ञा हेतु विरोधेनाऽसङ्गतत्वात्, "महान् प्रभुर्वै सत्वस्यैष प्रवर्तकः" (श्वे ३।१२) इति, महापुरुषस्य सत्वप्रवर्तकत्वेनोक्तेः, सत्वप्रवर्तको, विष्णुरेवेत्यस्याऽर्थस्य, "अथ यो हवै खलु सात्विकांशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः" (४ प्रपा० ५सं०)इति मैत्रायण्युपनिषत्सिद्धत्वात्, श्रीपुरुषसूक्त नारायणाऽनुवाक प्रभृत्युक्त सर्वाननत्वादीनाम्, "सर्वाननशिरोग्रीवः" (श्वे० ३।११)इत्यादिषूक्तेश्च तत्प्रकरणं नारायणपरम्, "ततो यदुत्तरतरम्" इत्यत्र "ततु"[1] शब्दः हेतुपरः, [यद्वा] "इदं पूर्णमि"ति पूर्वोक्त परामर्शि परं वा [शिव शब्दः, अवयवशक्त्या नारायण परः ]

(६) "रुद्र स्तारकमि"त्यादिषूक्तं, न मोक्षप्रदत्वम्, किन्तु, ज्ञानोपदेष्टृत्वम्, "स नो देवः शुभया स्मृत्या सं-

---

१ "ततो हेतोः" इति दीपे (३।२।३०) (२) "तत" इति, "तेनेदं पूर्णंपुरुषेणसर्वम्" इति प्रथमा निर्दिष्टं जगत् गृह्यते इति जगत उत्तरः परः, पुरुष एवाऽभिधीयत इति केचित् आचार्याः" इति श्रुत० वेदार्थ सं० ।

पुनक्तु" (भे० ४।१२) इत्यत्रोक्तमपि ज्ञानप्रदत्व-
मेव, "उपायोऽस्मि हरौ स्मृत:" (हरिवं० भ० ८९।
१४) "ईश्वरात् ज्ञान मन्विच्छेत्" (मारयं०
१७।४१) इत्यादिषु अस्य ज्ञानोपदेष्टृत्वं नाराय-
णस्य मोक्षप्रदत्वञ्च सिद्धम्, "तस्यैवतु प्रसादेन
विष्णुभक्ति (:) प्रजायते" इत्युक्तरीत्या, रुद्रो भ-
गवद्भक्ति मुत्पादयति, अत एव, रुद्रभक्तो बाणा नि-
र्वैरिताच [स्यात] विबुधैः विष्णुभक्तिः अनु(नो)पमा
(अनुत्तमा)। वासुदेवात्तु मरणं कल्पान्ते कुपितात्
पुन:" इति रुद्रविषये भगवद्भक्ति मपेक्षितवान् ।

(७) श्रीरुद्र त्वरित प्रभृतयोऽपि परत्वचिन्ह जगत्कार-
णत्व, मुमुक्षूपास्यत्व, मोक्षप्रदत्वाद्यभावात्, प्रत्य-
क्षश्रुत्यन्तरविरोधात्, अग्निचयनादिषु विनियुक्त-
त्वाच, न रुद्रपरत्वपराः ।

(८) तस्मात् रुद्रस्यो पारत्वं मोक्षप्रदत्वञ्च न घटते
(घटेते) ।

(९) किञ्च, "ये स्वधर्मस्थिता वर्णा विप्राद्याः कुरुन-
न्दन । त्रिकर्मसु नवर्तन्ते प्रीतिमांस्तेषु केशवः"
(७५।३) "ब्रह्मचारी ग्रहस्थाद्याः" (७५।४) "त-
स्मात् प्रियतरं कृष्णस्य" (७५।१३) "येषामनु-

ष्टिः पारक्ये" (७५।१४) "वेदाः प्रमाणं स्मृतयः" (७५।१५) "परद्रव्येषु आत्यन्धाः परदारेष्वपुंसकाः। परवादेषु ये मूकाः ते सर्वे दयिता मम" (७६।२२) "श्रुतिस्मृत्यु दितन्धर्मम्"(७६।२९) "श्रुतिस्स्मृतिर्ममैवाऽऽज्ञा" (७६।३१) "द्विविधो भूतसर्गोऽयं दैव आसुर एवच। विष्णुभक्तिपरोदेवो विपरीत स्तथाऽऽसुरः" (१०९।७४) इति, श्री॰विष्णुधर्मवचनैः, "दैत्यानां बहुमानित्वं मात्सर्यं मम सत्क्रिया। निन्दाऽनिन्दति शास्त्राणां हरिभक्तिरनूपमा" इति वामनपुराणवचनेन, "सुरपति रसुरै स्सदाभियुक्तः पशुपति रप्यविनीतभृत्यवर्गः सुरगुरुदृढ प्रसादकर्तारौ हरिचरणौ स्मरणाऽ(ता)पवर्गहेतुः" (९।६) इति नृसिंहपुराण वचनेन, "विष्णुभक्ति समायुक्तान् श्रौतस्मार्त प्रवर्तकान्। प्रियो भवति यो दृष्ट्वा वैष्णवो ऽसौ प्रकीर्तितः" (उत्त॰४।६) इति लैङ्गवचनेन, "येचवेदविदो विप्राः" (सभा॰ ३८।२३) "महात्मान स्तु मां पार्थ" (गी॰९।१३) इति महाभारतवचनाभ्याम्, भगवद्भक्ताः, सत्त्वप्रकृतिकाः, वैदिकाः भवद्भयन्ती स्वर्थः सिद्धः, ।

(१०) एता स्तु, तमःप्रकृतिकाः, अवैदिकाः भवन्तीतिच सिद्धम् ।

(११) "वासुदेव परा यत्र वेदमार्गानुसारिणः । रुद्रभक्ता स्त्रयी बाह्याः भस्मोद्धूलन विग्रहाः" (उत्त० ६।१७) इति, लैङ्गवचनेन भस्मोद्धूलनं रुद्रभक्तानां लक्षणमिति सिद्धम् ।

(१२) भस्मोद्धूलनञ्च, "तस्मात् सर्वप्रयत्नेन भस्मोद्धूलन विग्रहाः । जटिनो मुण्डिनश्चैव नग्ना नाना प्रका (रा) रिणः (लैं० पू० ३४।३०) "जटिला मुण्डिता वाऽपि" इति, लैङ्गे महाभारतेच, नग्नत्वादिधर्म सहचरितत्वेन कथनात्, "न भस्मकेश नख तुष कपालाऽमेध्या न्यधितिष्ठेत्" (गौतमस्मृ० ९ अ० ९ सू०) इति निषिद्ध द्रव्यसाहित्येन ग्रहणात्, भस्मनः अशुद्ध द्रव्यत्वात्, "नग्नं वाऽनुपनीतं वा विप्रं स्पृष्ट्वा प्रमादतः । मृद्भिर्द्वादशभिः स्नात्वा वासोभिस्सह शुध्यति" "तस्मात् एतान्नरो नग्नान् त्रयी सन्त्यागदूषितान् । सर्वदा वर्जयेत् प्राज्ञः आलापस्पर्शनादिषु" (विष्णुपु० ३।१८।५०) इति नग्नत्वादीनां वेदबाह्यत्वात् च, "त्रिपुण्ड्धारिणो नित्यं भस्मोद्धूलन तत्पराः । भविष्यध्वं त्रयीबा-

ह्याः मिथ्याज्ञान प्रलापिनः" (आदि०) "ऋषी-
णाममायया सर्वमिति सञ्चिन्त्य तत्रवै। शशाप तान्
जटाभस्मामिथ्यावृत (भूत) परां स्तथा" (वा०
७१।३९) इत्यादित्यपुराण वराहपुराणवचनाभ्या-
मपि वेदबाह्य लक्षण मित्युच्यते ।

(१३) एवं, वेदबाह्यलक्षण युक्त तामसपुरुष सेव्यत्वात्, अज्ञानादिकार्ययुक्तत्वात्, देवत्वेन रुद्रस्य सकृत्स-त्वगुणे सत्यपि, "न तदस्ति पृथिव्यां वा" (गीता० १८।४०) इति, गुणत्रयवश्यत्वेन तमोगुणस्याऽपि सत्वात्, तस्यच ब्रह्मादीनां सत्वेऽपि त-दपेक्षयाऽतिशयितत्वेनाऽपेक्षिततामसत्व व्यपदेशस्य युक्तत्वात्, स्वस्यच तामसपुरुषत्वेन सापेक्ष-त्वसूचक जटा चर्म वसनादि साधकधर्मयुक्त-त्वाच्च, रुद्रस्यो पास्यत्वादिकं न घटते ।

(१४) श्रीपुरुषसूक्त प्रक्रियया च नारायणस्य कारणत्व चिह्नानि, मुमुक्षूपास्यत्व मोक्षप्रदत्वानि (च) सि-द्ध्यन्ति ।

(१५) ननुचाऽस्या ऽसाधारण वाहनाऽयुधनाम स्मृतिषु अन्यतमसङ्कीर्तनाऽभावात्, "ईशान" पदमत्वाच्च न नारायणपरमितिचेत्, (तदनुपपन्नम्) सहस्रशी-

र्षो पुरुषः" इत्याद्युक्तेः, तानि चैतदसाधारणानीति नारायणानुवाकसिद्धत्वात्, लक्ष्मीपतित्व लिङ्गात्, नारायणप्रतिपादक सुबालोपनिषदि, "पुरुष एवेदम्" (ऋ॰) इति पुरुषसूक्त वाक्येन निगमात्, आथर्वणे (णे) "वैष्णव्यां पुरुषसूक्तम्" इतिवैष्णव महाशान्तिमन्त्रत्वेन विनियोगात्, छान्दोग्ये, "एषा वै वैष्णवीनाम संहिता" इत्युक्तेः, भगवत्समाराधनरूपकर्मादिषु बोधायनप्रभृति परमर्षिभिः विनियुक्त (ज्य) त्वात्, पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम्" (शौनककल्पे) इति शौनकवचनात्, बहुप्रदेशेषु पुरुषशब्दप्रयोगात्, पुरुषं नारायणमिति समाख्यपाच नारायणपरमिति सिद्धम् ।

(१९) अत्रे "ईशान" शब्दो नारायणशब्दवत् महासंज्ञाभूतः "अमृतत्व स्येशानः" इत्युक्तेः, पुरुषशब्दश्चैतद्विषये रूढः, न चेतनसामान्यवाचित्वेन प्रयुज्यते, सालपादपादिशब्दवत् सामान्यविशेषोभयवाची भवति, मुण्डकोपनिषत् प्रभृत्यनेकोपनिषद्भिः, पुरुषः पुण्डरीकाक्षः (क्षः)" (लैङ्गे पृ॰ ७०।१२) "द्विर्द्वादशेभ्य स्तत्त्वेभ्यः ख्यातोऽयं पञ्चविंशकः।

पुरुषो वासुदेवश्च परमात्मेति चोच्यते" (भार० शां०मो०३३९।२४) "विद्यात्तु पुरुषं परम्" (मनु०१२।१२२) इत्याद्युपबृंहणैः, "अथाऽतो महापुरुषस्याऽहरहः परिचर्याविधिं व्याख्यास्यामः" (१।१) इति, बोधायन वचनेन, "परमः पुमानिव पतिः पत्युः" इत्यर्वाचीन प्रसिद्ध्याच पुरुषशब्दो नारायणपर इति सिद्धम् ।

(१७) "तत्पुरुषाय विद्महे महादेवाय धीमहि" (तै० १।२२) "पुरुषो वै रुद्रः" (तै०१६।१) इत्यादि प्रदेशेषु रुद्रोऽपि पुरुषशब्देनोच्यते इतिचेत्, तत्र तत्र नामतया पुरुषशब्दो न प्रयुज्यते, किन्तु नमस्कार्यत्व हेतुभूत परमात्मप्रकारत्वहेतुक त्रिपुरदहनपराक्रमादिगुणयोगप्रभृतिभिः प्रयुज्यते ।

(१८) तथा चैवं, परत्वचिह्न जगत्कारणत्व मुमुक्षूपास्यत्व मोक्षप्रदत्वाना मत्रैव स्थितत्वात्, "सर्वे वेदा यत् पद मामनन्ति" (कठो०१।२।१५) "सर्वे वेदा यत्रैकम्भवन्ति" (यजु०आर०३।११) "वचसां वाच्यमुत्तमम्" (जित०१।७) "यश्छन्दसा मृषभो विश्वरूपः" (तै०शिक्षा०४।१) इति वेदैरेव 'स्वप्रतिपाद्यो, नारायणः' इत्युक्तत्वात्, "वेदैश्च सर्वै

रहमेव वेद्यः" (गी० १५।१५) इति 'अहमेव वेदप्रतिपाद्यः' इति तेनैवोक्तत्वात्, "नारायणपरा वेदाः" (भाग० २।५।२५) "वेदे रामायणे पुण्ये भारते भरतर्षभ। आदौ मध्ये तथाऽन्ते च विष्णुः सर्वत्र गीयते" (वि०ध० ७०।१५०) "एतमेकं वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम्। इन्द्रमेकेऽपरे प्राणं अपरे ब्रह्म शाश्वतम्।" (मनु० १२।१२३) इत्येवमृषिभिरुक्तत्वात्, "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" (इतिहाससमु० ३२।१०१, नारसिं०पू ६४।७७) "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः। तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः (परः)" (भार०शां०मो० ३४७।८९) "श्रूयतां तु नरव्याघ्र वेदवेदान्तनिश्चयम्। यज्ञेशो यज्ञपुरुषः पुण्डरीकाक्ष संज्ञितः। तद्विष्णुपरमं महा यतो नाऽऽवर्तते पुनः" (वि०ध० ९१।२६) "विष्णुरेव परब्रह्म त्रिभेद मिह पठ्यते। वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः" (वाराहे ७२।४) "यत्तत्त्वं परमं ब्रह्म वेदशास्त्रेषु पठ्यते। (भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः। स हि सत्य

मृतञ्चैव पवित्रं पुण्यमेव च) स देवः पुण्डरीकाक्षः स्वयं नारायणः परः" (वारा० ३१।१५), इति प्रमाणतर्कपूर्वक विचारवद्भिः [तैः] 'अयमेव परतत्त्वमिति निर्व्यूढत्वात्, तान्विनैव ब्रह्मविष्णु शिवेषु त्रिषु. अधिकःकः इति विचार्या ऽगच्छति भृगुम्प्रेषयित्वा परीक्ष्य, तत् निशम्याऽथ मुनयो विस्मिता मुक्त संशयाः। भूयांसं श्रद्धधुर्विष्णुं यतः शान्तिर्यतोऽभयम्" (भाग० १०।८९।१५) इति शान्त्यादिगुणयोगेनाऽयमेवाऽधिका इति निर्णीतत्वात्, "जृम्भितन्तु धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः। अधिकं मेनिरे विष्णुं देवाः सर्षिगणा स्तदा" (रामा० बा० ७५।१९) इति देवैः परीक्षापूर्वकं निर्णीतप्रकारस्य परशुरामेणोक्तत्वात्, स रुद्रसमीपे (पार्श्वे) गत्वा [तस्मिन्] ध्यानपरे स्थितं, "त्वङ्क ध्यायसीति" पृष्टः, "योगीश्वरं जगन्नाथं विष्णुं जिष्णुं जगत्पतिम् । पद्मनाभं विशालाक्षं चिन्तयामि जगद्गुरुम्" इति "जगत् पतिं[1] विष्णुं ध्यायामी"ति तेनोक्तत्वात्, "नहि एतस्मात् इति नेत्यन्य-

१ जगत्पतिः जग स्वामी, पतिशब्दस्य योगेण रूढत्वात् न रक्षकार्थी, तथासति गोपदादीनामपि धातुबलात् मनुष्यत्वस्याचक प्रसङ्गः अत योगेण पतिशब्द- रूढ एव ।

त्परमस्ति" (प्रश्नो० ४।३।६) "न तस्येशे कश्चन" (तै १।९) "सत्यं सत्यं पुनः सत्यम्" (नारसिं १८।३ ३) "नारायणात् परो देवो न भूतो न भवि-ष्यति । एतत् रहस्यं वेदानां पुराणानाञ्च [सम्मतम्] सत्तम" (वारा० ७३।४९) "न प्रमातुं महायोगी (महाबाहो) शक्यो भारत केशवः । परेभ्यः परमेतस्मात् विश्वरूपात् न विद्यते" (भारते) इति 'एतस्मात् परभूता(ः)न सन्ती' त्युक्तत्वाद्वा-ऽयमेव सर्वस्मात् परः ॥

द्वितीयप्रकरणं समाप्तम् ।



## तृतीयप्रकरणम् ॥



(१) अस्य सर्वेऽप्यात्मानः, (सर्वात्मानः) सर्वप्रकार परतन्त्राः ।

(२) तेच देहादिविलक्षणाः ।

(३) ननु, "स्थूलोऽहम् कृशोऽहम्" इति देहेऽहम्बुद्धि-व्यवहार दर्शनात्, अहमर्थभूत आत्मा देह एव, अनयो रहम्बुद्धिव्यवहारयोर्देहाऽतिरिक्तो विषय इति न वक्तुं शक्यते, तस्य स्थौल्यादीना मघटनात्, घटपटादीनामिव पार्थिवस्य शरीरस्य चैतन्यं न घटत इतिचेत्, "मदशक्तिवत्"[१] परिणाम विशेषेण घटते, ननु, बाल युव वृद्ध शरीराणि अन्योऽन्यं भिन्नानीति वक्तव्यम्, एकोहि (एकत्वे) परिणामभेदो न घटते, भेदेतु बाल्येऽनुभूतस्य यौवने स्मरणं नस्यात्, यदि स्यात् एकेनाऽनुभूत मन्यः स्मरेत, तत् न पश्यामः, अत्रतु स्मृतिं जानीमः, तस्मात् आत्मादेहातिरिक्तः विलक्षणः स्यात् इति चेत् तत् अप्यनुपपन्नम्, शरीरभेदाऽभावात्, एक-

---

१ "पृथिव्यापस्तेजो वायुरिति तत्वानि तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्" इति बार्हस्पत्य. (सू०)।

स्यैव कालभेदेन परिणामभेदो [हि] घटते, 'बाल्ये दुःखितोऽहं, यौवने सुखी भवामि, बालोऽहमेव युवा भवामि' इति प्रत्यभिज्ञाभिः युवशरीरं पुरातनशरीरमिति सिद्धम्, न चेत् बाल्येऽनुभूतस्य यौवने स्मरणं नघटते, स्मृतिप्रत्यभिज्ञयो ह्यमर्थस्यैव अहि, नहि देहस्येति वक्तुं न शक्यते, देहव्यतिरिक्ताऽहमर्थस्य अदर्शनात्, किञ्च, देहेऽतिकालापगमेऽपि 'स एवाऽयम्, इति परस्य जायमाना प्रत्यभिज्ञा अपि नघटते, प्रत्यभिज्ञाया (ः) देहाऽतिरिक्तो विषय इति वक्तुं न शक्यते, तस्य अचाक्षुषविषयत्वात्। प्रत्यभिज्ञा भ्रान्तिरिति वक्तुं न शक्यते, बाधकाऽभावात्, विपक्षे, स्मरणाऽनुपपत्ति रूपबाधकसत्वाच्च, एवं देहेऽहम्बुद्धि(ः) अनङ्गीकारे, विधिनिषेध(.), देहात्मभ्रमो(भ्रम), तन्निवृत्त्यर्थं शास्त्रश्रवणादिकञ्च नघटते, तस्मात् देह एव आत्मा भवितु मर्हति इति चेत्, तत् अनुपपन्नम्, देहोऽनेकाऽवयवसङ्घातात्मक इति अयमर्थः सिद्धः, तत्र सर्वेषा मवयवानां चैतन्ये सति अनेकचेतनोपलब्धिप्रसङ्गः, अवयवाना मन्योऽन्य अविवादनियमः, तत मम- तावुद्धि, ममताव्यवहारश्च नघटेत। एकस्यैव अव-

यवयवेषु चैतन्यस्वीकारे, तस्य विच्छेदेऽवयवान्तरा-ऽनुभूतस्य [अवयवान्तरेण] स्मरणं नघटेत, पश्चादहम्बुद्धिव्यवहारौ, ममताबुद्धिव्यवहारौच नस्याताम्। सर्वशरीरव्यापि सुखदुःखाऽनुभवश्च नघटेत । नाऽवयवसङ्घातात्मकं शरीरम्, किन्तु अवयवि, तत्र चैतन्यमिति वक्तुं नशक्यते, उपलम्भाऽनुपपत्त्यभावेन अवयवि स्वीकारस्य अनुपपन्नत्वात्, किञ्च, "बालदेहोऽहम् मन्दज्ञानः, युवदेहोऽहं बहुज्ञानः, मम शरीरम् इति शरीराऽहमर्थयोः जायमानाऽभेदप्रतिपत्ति, भेदव्यवहारश्च नघटेताम्, "मम अयं मात्मा" इत्यत्रेव अमुख्यत्वं वक्तुं नशक्यते, मुख्यत्वे बाधकाऽभावात्, अथवा अहम्बुद्धेः शरीरमेव विषयः इति स्वीकारेऽपि श्रुति श्रुत्यर्थापत्तिभ्यां देहाऽतिरिक्तो, देहान्तरपरिग्रहयोग्यश्च आत्मा सिद्धः ।

(४) बाह्येन्द्रियाणि नात्मा भवितुमर्हन्ति, एकमेव सर्वेन्द्रियविषयाणि जानातीति उक्तेः, [एकमेव सर्वं जानातीति वक्तव्यत्वात्] एव मनङ्गीकारे, "योऽहमिममर्थं पश्यामि, स एवाऽहं स्पृशामि" इति प्रतिसन्धानं नघटते ।

(५) यदि, चक्षुरेवाऽऽत्मा, अन्धो रूपं न स्मरेत् ।

(६) यदि, श्रोत्रमेव आत्मा, बधिरः शब्दं न स्मरेत् ।

(७) एव मिन्द्रियान्तरेष्वपि दृष्टव्यम् ।

(८) अन्तः करणमपि नात्मा भवितु मर्हति, स्मर्तुः (कर्तुः) स्मरणादिकार्याणां करणतया कल्पितत्वात्, इदमेव स्मरतीति वक्तुं न शक्यते, स्मरण(स्य)करणाऽभावात्, करणमपि स्वयमेवेति न वक्तव्यम्, विरुद्धत्वात्, अन्यत् किञ्चित् करणमित्युक्तौ, तत् बाह्यकरणञ्चेत्, तत् शून्यस्य स्मृतिर्न घटेत अन्तःकरणञ्चेत् आत्मनो मनः इति नाम कृतं भवेत् अन्तःकरणमनपेक्षितञ्चेत्, इन्द्रियार्थसम्बन्धवेलायामेव (सर्वं) ज्ञानमपि जायेत, तस्मात् मनोऽपि नात्मा भवितु मर्हति ।

(९) प्राणा अपि नात्मा भवितु मर्हन्ति, सङ्घातरूपत्वात्, देहात्मपक्षोक्त दूषणानि अत्रापि तुल्यानि, ("निरस्तो देहचैतन्यप्रतिषेधप्रकारतः । प्राणात्मवादो न पृथक् प्रयोजयति दूषणम्" आ०)

(१०) ज्ञानमपि नात्मा भवितु मर्हति, "मम ज्ञानं जातम्, नष्टमि"ति क्षणिकत्वेन आत्मधर्मत्वेन च भानात्. (ज्ञायमानत्वात् ङ०)

(११) स्थिरभूतः कश्चन आत्मा अस्तीति, "परेद्युर्दृष्टवान् अहमेव अद्य पश्यामि" इति प्रत्यभिज्ञया सिद्धः ।

(१२) [1]निर्विषया, निराश्रया च संवित् आत्मेति वक्तुं न शक्यते, तथाविधसंविदोऽसम्भवात् ।

(१३) [2]ननु [च] [नहि ङ॰] ज्ञानमात्मधर्मो भासते, किन्तु, अन्तः करणभूताऽहङ्कारस्य धर्मो हि भासते, इति [न] वक्तुं शक्यते, दृश्यत्वात्, परार्थत्वात्, (प्रकृति)परिणामत्वात्, जडत्वाच्च देहादीना मिव अहङ्कारस्य ज्ञातृत्वाऽसम्भवात् ।

(१४) [3]ननु, चैतन्य सन्निधि मूलक छायापत्तिवशात् ज्ञातृत्वं सम्भवतीति चेत्, न सम्भवति, चैतन्यस्य ज्ञातृत्वा ऽसंम्भवात् ।

(१५)[4]ननुच, दर्पण जल खण्डानां, मुख चन्द्र गोत्वाऽभिव्यञ्जकतया तानि तत्तन्निष्ठतया इव चैतन्याऽभिव्यञ्जकतया अन्तःकरणस्य तत्तन्निष्ठतया भासत इति चेत्, स्वयम्प्रकाशस्य आत्मनो जडभू-

१ ननु संविदेवेत्युक्तम्, इत्यादि (१।१।१) भाष्ये ।
२ "यदप्युक्तम् अविक्रियस्यात्मन" इत्यादि (१।१।१)
३ "जडस्वरूपस्य अहङ्कारस्ये' त्यादि, १।१।१ ।
४ "अहङ्कारस्तु अनुभूते"रित्यादि १।१।१ ।

ताऽहङ्कारो व्यञ्जक इत्युक्तिः शान्ताङ्गारः आदित्यं प्रकाशयति इत्युक्तिरिव ।

(१६) [1]दर्पणजलम् मुखचन्द्रयो र्न व्यञ्जकम्, किन्तु, चाक्षुषतेजःप्रतिफलनहेतुः ।

(१७) [2]अभिव्यञ्जक स्तु आलोकादि रेव ।

(१८)[3]जातेर्व्यक्तिनिष्ठतया भानं व्यक्त्या कारतया ।

(१९) [4]किञ्च, चैतन्याऽभिव्यङ्ग्याऽहङ्कार स्तस्य (चैतन्यस्य) व्यञ्जको न भवति ।

(२०) आदित्य किरणाऽभिव्यङ्ग्य(म्) करतलम् तद्व्यञ्जकं पश्यामः इति चेत्, न करतलव्यञ्जकम्, किन्तु करणबाहुल्यहेतुः । (१।१।१)

(२१) सुषुप्तौ, मुक्तिदशायाञ्च अहमर्थाऽभावात् सोऽपि नात्मा भवतीति चेत्, तन्नाऽप्यस्ति, सुषुप्तौ नास्ति, चेत्, सुप्तोत्थितः, "पूर्व मह मिद मकरवम्, इद मशृणवम्, इदमन्वभवम्" इति न परामृशेत्, मुक्तिदशाया मात्मा नास्तीतिचेत्, आत्मनाश एव

---

१ "नच दर्पणादि मुखादे रभिव्यञ्जक" इत्यादि, १॥१॥१॥

२ "अभिव्यञ्जकस्तु" इत्यादि, १।१।१ ।

३ "व्यक्तेस्तु जाति राकार० इति तदाश्रयतया प्रतीति" १।१।१ ।

४ "किञ्च अहङ्कारा ऽनुभवयो." इत्यादि १।१।१ अत्र भाष्यवाक्यान्येव( सर्वत्र) ।

मोक्षःस्यात्, स्वनाश मपेक्ष्य मोक्षोपायेऽधिकारि-
विरहात्, मोक्षशास्त्रम प्रमाणं स्यात् ।

(२२) "मत्तः सर्वं महं सर्वम्" (वि॰पु॰१।१९।८५) "अहमेकः प्रथम मासम्" (अथ॰खो) इति तत्त्वज्ञानवन्तो, मुमुक्षवः, "अह मन्नम्" (तै॰भृ॰ १०।६) इति मुक्तः "यस्मात् क्षरमतीतोऽहम्" (गीता॰ १५।१८) "अह मात्मा गुडाकेश" (गी॰१०।२०) "नत्वेवाऽहम्" (गी॰२।१२) अहं कृत्स्नस्य" (गी॰७।६) इति परं ब्रह्म च न व्यपदिशेयुः । (१।१।१)

(२३) यदि, अहमर्थस्य आत्मत्वम्, तदा, "महाभूतान्य हङ्कारः" (गी॰१३।१५) इति तस्य क्षेत्राऽन्तर्भावः कथं संघटत इतिचेत्, अहङ्कारस्यैव तत्रोक्तः नाहमर्थस्य । (१।१।१)

(२४) अहङ्कारस्य शास्त्रेषु हेयतयोक्ति रस्तिचेत्, तत्र गर्वरूपाऽङ्कारस्यै वोक्तिरिति, नाहमर्थः, अहङ्कारः, अपितु आत्मैव, तस्मात् आत्मा देहादिविलक्षणः, न तद्वत् अनित्यः । (१।१।१)

(२५) "न जायते म्रियते वा विपश्चित्"(कठो॰१।२।१८) "ज्ञाऽज्ञौ द्वौ अजा वीशनीशौ" (श्वे॰१।८)

"अजो नित्यः शाश्वतोऽयं पुराणः" (कठो० १।२ १८, गीता० २।२०) "नित्यो नित्यानाम्" (कठो० २।५।१३) इति उत्पत्ति विनाश शून्यत्वेनोक्तेः, ["नात्माश्रुतेः" (२।३।१८)]

(२६) ननु, "प्रजापतिः प्रजा असृजत" (यजु० २।१) "सन्मूलाः" (छा० ६।८।४) "यतो वा इमानि भूतानि जायन्ते" (तै० भृ० १।१) यतः प्रसूता जगतः प्रसूती तोयेनजीवान् व्यससर्ज भूम्याम्" (तै० १।४) इति उत्पत्ति विनाशौ कथ्येते इतिः चेत्, तत्रोक्तौ देहसम्बन्धदेहवियोगौ।

(२७) यदि नित्यस्तदा सृष्टेः प्राक् एकत्वाऽवधारणं नघटत इति चेत्, एकत्वस्य नामरूपविभागाभावतया घटते, (२।३।१८)।

(२८) संहारदशायाम् यदि आत्मा न स्यात्, तदा ईश्वरस्योपादानत्व नघटते, अकृताभ्यागम, कृत विप्रणाशाव[1]पि स्याताम्।

(२९) अतो ऽऽत्मा नित्यः (अत आत्मनित्यत्वं स्वीकर्तव्यम् पा० )

---

१ अकृताभ्यागम अहेतुकफलप्राप्ति, कृतविप्रणाश कृतस्य कर्मणो निष्फलत्वम्।

(३०) "अमृताक्षरं हरः[१]" (श्वे० १।१०) "आत्मा शुद्धो ऽक्षरः" (वि पु० २।१३।६७) "एकं सदैकम्" (वि पु० २।१२।४४) इत्युक्तेः देहादिवत् उपचयाऽपचययो रनर्हः, एकरूपश्च भवति ।

(३१) देहपरिमाण इति पक्षः, "आत्मानिर्विकार, इति श्रुत्याबाधितः (२।२।३२ "एवञ्चे"ति) ।

(३२) "स्थूलोऽहम्, कृशोऽहम्, पादे मे वेदना, शिरसि मे सुखम्" इति प्रतिपत्तिश्च नसिद्ध्यत इति चेत्, देहाऽऽत्मभ्रमात् युज्यते, अनेकशरीरपरिग्रहकर्तृणां योगिनां स्वरूपस्य च शैथिल्यं प्रसज्येत ।

(३३) एतत् स्वरूपं तद्वत् नजडम्, किन्तु, "हृद्यन्त ज्योतिः पुरुषः" (बृ० ६।३।७) "अत्राऽयं पुरुषः स्वयञ्ज्योति र्भवति" (बृ० ६।३।१४) "विज्ञानघनः" (बृ० ४।४।१२) "तच्च ज्ञानमयं व्यापि स्वसंवेद्य मनूपमम्" (वि० पु० १।२२।४२) इत्युक्तप्रकारेण स्वयं प्रकाशम्भवति, (१।१।१) स्वयंप्रकाशत्वञ्च ज्ञानं विनाऽपि स्वयमेव ज्ञेयत्वम् ।

(३४) ननु, स्वरूपस्य नित्यत्वे स्वयमेव प्रकाशमानत्वेच

---

१ हर इति भोक्ता निर्दिश्यते, प्रधान मात्मनो भाग्यत्वेन हरतीति, हरः "

सुपुप्तावपि तत् ज्ञानं स्यात् इतिचेत्, तदा नभाति चेत् उद्बोधदशायाम्, 'एतावन्तङ्कालं सुखमस्वाप्सम्' इति प्रत्यवमर्शो नस्यात्, (१।१।१ "एवं हि सुप्तोत्थितस्येत्यादि)

(३५) ननु, अहं किमपि नाज्ञासिषम् इत्युक्तिप्रकारः कथमितिचेत्, नाज्ञासिष'मित्यस्य मद्व्यतिरिक्तं नाज्ञासिष मित्यर्थः मामऽप्यहं नज्ञातवानिति वदतीति चेत्, मामपि न ज्ञातवानि त्यस्य शरीरविशिष्टं मां न ज्ञातवा नित्यर्थः स्वरूप प्रकाशाऽभावे तदा अहमिति वक्तुं न शक्यते, "अहं ब्रह्माऽस्मि" (अय महमस्मि पा०) इति इममर्थं श्रुति रप्यवदत्, तदा विशद प्रतिभासाभाव स्तमोगुणाऽभिभवात् ।

(३६) प्रकाशश्च अनुकूलो भवति, "सुखमस्वाप्सम्" इति प्रत्यभिज्ञैव अस्मिन् अर्थे प्रमाणम् ।

(३७) (ननु,) "इदानीं सुखं यथोत्पद्यते, तथाऽस्वाप्सम्" इति तद (अस्या)र्थः इति न वक्तुं शक्यते, प्रतिपत्तिशरीरस्य तदाऽऽकरं विना, 'मधुरमगाप-म्'[1] इतिवत्, विद्यमानत्वात् ।

---

१ यथा_मन्दमगच्छन्मधुरमगायम् इति परामर्शो यथमस्य। मदि

(३८) स्वरूपस्य अननुकूलत्वे प्रेमास्पदत्वं न घटते, "आश्चर्यवत् पश्यति कश्चित् एनम्" (गी० २।२९) इत्यादिभि रयमर्थः सिद्धः।

(३९) "आर्द्रंज्वलति ज्योतिर हमस्मि" (तै० १।४१) इत्युक्तप्रकारेण आत्मा ज्ञानाऽऽनन्दस्वरूपो भवति।

(४०) तावत्पर्यन्तं विना ज्ञानाऽऽनन्दयो राश्रयश्च भवति।

(४१) "अथयो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान् पश्यन् रमते" (छा० ८।१२।५) "न पश्यः मृत्युम्पश्यति" (छा० ७।२६।२) "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" (बृ० ४।३।७) "विज्ञातारमरे केन विजानीयात्" (बृ० ६।५।१५) "जानात्येवाऽयम्पुरुषः" "एषहि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धाकर्ता विज्ञानात्मा पुरुषः" (प्रश्नो० ४।९) "एवमेवाऽस्य परिद्रष्टुः" (प्र० ६।५) इत्यादि श्रुत्या, "इममर्थं अहञ्जानामी"ति प्रत्यक्षेण च ज्ञाता इत्ययमंशः सिद्धः।

---

तत्र यथेदानीं मान्द्यं माधुर्यं च भवति, तथागद्यमगाधम् इ-त्ययं उपपद्यते, अपितु गीतगानसमकालमेव माधमाधु-र्ययो रुपपन्नम्, तद्वत् प्रत्यक्त्वस्फुरितत्वे अपि स्वापसमकालीने इत्यर्थः।

ततोऽधिका" (वि० पु० ६।७।६४) इत्युक्तप्रकारेण, कर्मानुगुणतारतम्यविशिष्ट(:), "तेनाऽस्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ।"[1] इत्युक्तप्रकारेण, इन्द्रियद्वारा निर्गत्य विषयग्रहणसमर्थम्भवति, तस्मात् प्रसरणादिकमादाय उत्पत्तिविनाशकथनम्, ऐक्येसति अनेकभानमपि तस्मात् एतच्च अजडं, सङ्कोचविकासयोः, संयोगवियोगादीनाञ्च आश्रयत्वात् द्रव्यम् ।

(४४) ननु ज्ञानं नित्यद्रव्यं अजडञ्च यदि भवति, तदा सुषुप्तावपि किं न प्रकाशते, इति चेत्, तदानीमभानं तिरोहितानां मणिप्रकाशादीनामिव प्रसरणाऽभावात् सर्वस्य भगवदात्मकत्वात् अनुकूलतयैव भानेन एतत् आनन्दरूपं भवति ।

(४५) ननु तर्हि इदानीं विषशस्त्रादीनि प्रतिकूलानि, चन्दनकुसुमादीनि अनुकूलानि, काष्ठलोष्टादीनि उपेक्षाविषयाणि चैतानि स्वतन्त्राणि सान्तिच किं भान्ति इति चेत्, कर्मदेहाऽऽत्माभिमानादिभिः तथा भासन्ते, न स्वभावतया, स्वभावश्चेत्, कदाचित् अनुकूलानि, चन्दनकुसुमादीनि काला-

१ मनुः २।९९

न्तरे प्रतिकूलानि भान्ति "वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमायच । कोपायच यत स्तस्मात् वस्तु वस्त्वात्मकं कुतः । तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपायततः प्रसादायच जायते । तस्मात् दुःखात्मकं नास्ति नचकिञ्चित् सुखात्मकम्" (वि०पु० २।६।४७।४८) इति ऋषिरप्यवदत् तस्मात् ज्ञानस्य आनन्दत्वमेव स्वभावम् ।

(४६) एवम्भूत ज्ञानत्व मात्मानोऽऽनन्दित्वम् ।

(४७) एव मात्मा ज्ञाता चेत्, "यो विज्ञाने तिष्ठन्" (बृ०५।७।२२) "विज्ञानं यज्ञ तनुते" (तै० आ०५।१) इति ज्ञानशब्दाभ्यां कुतः कथनमितिचेत्, (२।३।१९) ज्ञानैकनिरूपणीयः स्वयं प्रकाशश्च भवतीति तथोच्यते, (तस्मात् ज्ञाना नन्दीच भवति,)

(४८) "तेन प्रद्योतेनैव आत्मा निष्क्रामति"(बृ०६।४।२) इति उत्क्रमणोक्तेः अणुपरिमाणः, (२।३।२०) उत्क्रान्तीत्युक्तिः शरीरवियोग पर्यवसायित्वेनैवेतिचेत्, सा तथाचेत्, "ये वै केचाऽस्मात् लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"(कौषी० १।२) "तस्मात् लोकात् पुन रेत्यस्मै लोकाय कर्मणे"

(बृ॰ ६।४।६) इत्युक्तप्रकारेण गत्यागती न घटेयाताम्, (२।३।२१) "एषोऽणुरात्मा" (मुण्ड॰ ३।१।९) "बालाग्रशतभागस्य" (श्वे॰ ५।९) इत्यादिभिः श्रुतिरेव अणुरिति मुक्तकण्ठं मन्त्ररत्, (२।३।२३) "हृदि ह्ययमात्मा" (प्रश्नो॰ ३।६) "हृद्यन्तर्ज्योतिः" (बृ॰ ३।६।७) इत्युक्त्वा अस्य स्थिति हृदयप्रदेशे, (२।३।२५) आत्मा अणुर्हृदयप्रदेशे वर्तते चेत्, तदा पाणिपादादिषु सुखदुःखानुभवौ ज्ञानाव्याप्त्या घटेते, (२।३।२६)

(४९) आत्मानश्च अनेके ।

(५०) सुख दुःखेच्छादृपादि नियतया देहभेदेन, (अन्तःकरणभेदेन,) एतानि नियतानि भवन्तीतिचेत्, (शङ्कापक्षः) तर्हि, सौभरि शरीरेऽपि एतानि नियतानि भवेयुः देहभेद॰, (अन्तःकरणभेदश्च.) सुखादि भेदस्य यदि न हेतुः, तदा जन्मान्तरानुभूत मस्मिन् जन्मनि न किं स्मरेत् इतिचेत्, अस्मरणं संस्कारस्याऽनुद्भवाद्वा, नाशाद्वा, (तर्हि शरीरान्तरे सुखदुःखस्मृत्यादि अभावाश्च द्वयोरन्यतरस्यात् इतिचेत्, (तस्मिन्नपि) एकशरीरेऽपि स्मृति र्न घटते, एकश्चेत्, [अन्धबधिरादि व्यवस्था, नि-

षमसृष्टिश्च नघटेयाताम्, इति (ङ)पा०] बन्ध-मोक्षव्यवस्था, शिष्याऽऽचार्यव्यवस्था, विषमसृष्टिश्च न घटेत, वैषम्य नैर्घृण्यौ च प्रसज्येताम्, (सू० २।१।३४) "नित्यो नित्यानाम्" (श्वे० ६।१३) इति श्रुतिरपि अवदत, इयं श्रुति रौपाधिकभेदं वदति, अन्यथा जीवाऽद्वैत (प्रतिपादक) श्रुति-भि र्विरुन्ध्यात्, इति न वक्तुं शक्यते, (नवक्त-व्यम् पा०)तत्रोक्तं,[१] प्रकाराऽद्वैतम्,(इत्यर्थः ङ० पा) "सदा पश्यन्ति" (साम० सं उत्त० १८।१।५) "मम साधर्म्य मागताः" (गी० १४।२) इति मो-क्षदशायामपि भेदोक्तेः न भेद औपाधिकः तस्मा-त् आत्मानः अनेक इति सिद्धम् ।

(५१) "आत्मा शुद्धः" (वि० पु० २।१३।९६) "ज्ञान-मयोऽमलः" (वि० पु० ६।५।७) "ज्योति र्ज्वल-ति" (तै० उप० १।४१) इत्युक्तप्रकारेण एते प-रिशुद्धाः ।

(५२) "यस्याऽस्मि, योऽहमस्मि" (यजु० आर० ३।७ ४७) ब्रह्माऽहमस्मि" (तै० १।४१) "दासभूताः

---

१ तत्त्वत्रयव्याख्याने [१-प्र ४९-पा०] "ब्रह्माद्वैतं, औपाद्वैतमिति शास्त्रप्रतिपाद्यमद्वैतमनेकविध"मित्यादिमोक्तम्

(पाञ्चरात्रे) कृष्णस्य हि कृते"[१] (भार० सभा० ३८।२३) इत्युक्त्या एते भगवच्छेषभूताः ।

(५३) "यस्याऽऽत्मा शरीरम्" (माध्यन्दिनशा०) "पूः प्राणिनः" (आपस्तम्बध० १ खं) "तत्सर्वं वै हरेस्तनुः" (वि० पु० १।२२।८६) "तानि सर्वाणि तद्वपुः" (वि० पु० १।२२।८५) "अपरेय मितस्त्वन्याम्" (गी० ७।५) इत्युक्त्या इदञ्च शेषत्वं शरीरतया भवति ।

(५४) तथा चैवं आत्मानः(१), देहे(१) न्द्रिय(२) मनः(३) प्राण(४) धी(५)भ्योविलक्षणाः, स्वयंप्रकाशः(१), आनन्दरूपाः(३), ज्ञानाऽऽनन्दाऽऽश्रयभूताः(४), नित्याः(५), अणवः(६), परिशुद्धाः(७), भगवत् शेषभूताश्च(८) भवन्ति ।

तृतीयप्रकरणम् समाप्तम् ।

---

१ कृष्णस्य हि कृते इति कृष्णस्य शेषभूत मिदं कृत्स्नं जगत् इत्यर्थः " इति गीताभाष्यवचनम्. [५५]

# चतुर्थप्रकरणम् ।

(१) तेषां पुरुषार्थः, "तं यथा" (मुद्गलोप० ३) इत्यादि, "स्वेन रूपेणाऽभिनिष्पद्यते" (छा० ८।३।४) इत्युक्तप्रकारेण स्वरूपाऽविर्भावपूर्वकं, (४।४।१) नित्य निर्दोष निस्सीमाऽऽनन्दकं, सविभूतिक समस्तकल्याण गुणात्मक परमात्म याथात्म्याऽनुभवजनित प्रीतिकारित कैङ्कर्यम् ।

(२) ननु, कैङ्कर्यं दुःखरूपं लोके पश्यामः, "सेवा श्ववृत्तिः व्याख्याता तस्मा त्तां परिवर्जयेत्" (मनु० ४।६) इति निषिद्धश्च भवति, कथन्तस्य पुरुषार्थत्वम् इतिचेत्, लोके कैङ्कर्याणि सर्वाण्यपि नापुरुषार्थानि, प्रियतमविषये, (कैङ्कर्यस्य) पुरुषार्थतया दृश्यमानत्वात्, "सेवा श्ववृत्ति" रिति निषिद्धा इतरसेवा, इममपुरुषार्थ मित्ययमंशो धर्मिग्राहक प्रमाणेन बाधितः, तदपुरुषार्थत्वहेतुः, पापारब्धम्, "पुण्यपापे विधूय" ( मुण्डो० ३।२।३) त्युक्तत्वात् नेयं पापकार्यम्, स्वस्वरूपं यादृशप्रकार मनुमन्यते, तदनुरूपो भवति, (इमं) पुरु-

षार्थ(म्) इति सुरनरतिर्यगादिषु पश्यामः, तस्मात् मुक्तोऽपि स्वं शेषत्वेन अनुसन्धत्त इति कैङ्कर्यस्यैव पुरुषार्थः, तद्व्यतिरिक्त मपुरुषार्थ भवति ।

(३) देहादि विलक्षणत्वेन शब्दाद्यनुभवो न पुरुषार्थः, (चार्वाकाः)

(४) परतन्त्रत्वेन स्वानुभवमात्रं न पुरुषार्थः, (कैवल्यम्)

(५) स्वरूपस्य नित्यत्वेन स्वरूपोच्छेदनं न पुरुषार्थः, (सौगतादयः)

(६) नित्यज्ञानादि गुणकत्वेन वैशेषिकज्ञानादिगुणविनाशौ न पुरुषार्थः, (नैयायिकादयः)

(७) ननु, सुखञ्चेत् दुःखमिश्रं विना न तिष्ठति, इति विषसम्पृक्ताऽन्नवत् त्याज्यमिति न वक्तुं शक्यते, मोक्षसुखस्य, "नरोगम् नोतदुःखम्" (छा० ७। २६।२) इति दुःखमिश्रत्वाऽभावात्, दुःखनिवृत्तिर्नपुरुषार्थो भवेत्, सुखरूपस्याभावात्, तर्हि, दुःखनिवृत्तौ यत्नो न भवेदिति चेत्, दुःखस्याऽपि प्रतिकूलत्वेन भवेत्, सुखादपि दुःखनिवृत्तिरेव पुरुषार्थ इति यदि उच्यते, तदा दुःखमिश्रसुखसाधनं स्याऽवरोहणं न घटेत ।

(८) अविद्या निवृत्तिरेव मोक्षः, इति पक्षोऽप्यनुपपन्नः,

(शङ्करः) तस्य सुखरूपत्वाऽभावात्, सुखसाधन-
मिति वक्तुं न शक्यते, ब्रह्मणः सुखाऽनङ्गीका-
रात्, सुखाऽङ्गीकारे ब्रह्म सविशेषं भवेत् ।

(९) उपाधिवियोगो, मोक्ष इति पक्षेऽ (भास्करः)पि नक्षमते, सुखरूपत्वाऽभावात्, तिरोहितसुखस्य (स्वरूपस्य पा०) प्रकाश इति यदि उच्यते, तदा जीवसुखस्य प्रकाशः, उत परसुखस्य प्रकाशः, जीव सुखस्य प्रकाश इति न शक्यते वक्तुम्, जीवस्य नाशात्, परसुखस्यप्रकाश इत्यपि नवक्तुं शक्यते, तस्य तिरोधानाऽभावात्, उपाधिप्रदेशे सुखं तिरोहित मिति यद्युच्यते, तदा सर्वज्ञं न भवेत् ।

(१०) न स्वाभाविक भेदाऽभेदपक्षेऽ(यादवप्रकाशः)पि मोक्षः पुरुषार्थः, मुक्तस्य बद्धेन भेदसद्भावा-त्, बद्धदुःखस्य मुक्तस्याऽप्राप्तेः, ईश्वरस्य जीवे-नाऽभेदसद्भावात्, ईश्वरो जीवदुःखं स्वदुःखत्वे-नाऽनुसन्धाय सत्यसङ्कल्पत्वेन स्वयमेव निवारयेत्, तस्मात् आत्मनो मोक्षोपाया वरोहणे माभूत्, स-सर्वमुक्तिप्रसङ्गश्च ।

(११) तस्मात् निर्दोष निरतिशयाऽऽनन्दरूप परमात्म

कैङ्कर्य मेव मोक्षः (स्वमत०)

(१२) "तं यथा यथो पासते तथैव भवति" (मुद्गलो-प०३) "पृथक् आत्मानं प्रेरितारञ्च मत्वा जुष्टस्तत स्तेनाऽमृतत्वमेति" (श्वे०१।६) "एतत् साम गायन् आस्ते" (तै०भृ०१०।५) "किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः" (परमसं०) "आगच्छ वत्स भद्रन्ते पुण्डरूकमहामते (मद्रूपधारि नित्यात्मा मम पारिष दाश्रयः)" (नारसिं० पु०६४।११६) इत्यादीनि प्रमाणानि अनन्तानि ।

(१३), ननु, "ब्रह्म वेद ब्रह्मैव भवति" (मुण्डो० ३।२।९) "यत्र त्वस्य सर्वं मात्मैवाभूत्" (बृ० ६।५।१५) "विभेदजनके ज्ञाने नाश मात्यन्तिकङ्गते । आत्मनो ब्रह्मणो भेद मसन्तङ्कः करिष्यति" (दर्शनोप०४, वि०पु०६।७।९४) परमात्मना भवत्यभेदी" (वि०पु०६।७।९३) इत्यादिभिर्मोक्षदशायाम् ऐक्यकथनेनसति कैङ्कर्यघटनप्रकारः कथमिति चेत्, परमात्माऽऽत्मनो योगः परमार्थ इतीष्यते । मिथ्यैतदन्यत् द्रव्यं हि नैति तद्द्रव्यतां गतः" (वि०पु०२।१४।२७) इत्युक्तप्रकारेण हेमप्रनिभद्रव्यस्तुनो, हेयपोग्यवस्तुनभैक्यकथनम्

व्याहतम्, ऐक्यस्वीकारे, "आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने । विकार्य मात्मनः शक्त्या लोहमाकर्षको यथा" (वि० पु० ६।७।३०) "निरञ्जनः परमं साम्य मुपैति० (मुण्डो० ३।१।३) "मम साधर्म्य मागताः" (गी० १४।२) "तत् भावभाव मापन्नः" (वि० पु० ६।७।९३) इत्युक्तपरमात्म साधर्म्य न घटते, (सू० भा० १।१।१) "ब्रह्म वेद ब्रह्मैव भवति" (मुण्डो० ३।२।९)इत्यत्रोक्तं साधर्म्यम्, (१।१।१) "विष्णुरेव भूत्वे"त्यत्रे (यजपि०) व "एवे"ति एतदिवेति भूत्वा (कृत्वा) "ब्रह्म इव भवतीत्यर्थः अवधारणार्थकत्वेऽपि अयमेवाऽर्थः, "यत्र त्वस्ये"ति अत्र सर्वं परमात्मप्रकारभूतामिति, साक्षात्कारप्रकारं वदति, "विभेदजनक""परमात्मना । भवत्यभेदी त्यत्र देवादिरूपभेदो नास्तीत्यर्थः "देवादिभेदे विध्वस्ते" (वि० पु० २।१४।३३) इतीदं कण्ठोक्तम्, (१।१।१)

(१४) ननु, किङ्करश्चेत "स स्वराड्भवति" (छा० ७ २५।२) इत्युक्त स्वातन्त्र्यघटनप्रकारः कथमितिचेत्, स्वराडि"त्यस्य कर्मवश्यो न भवति इत्यर्थः, एवञ्चेत्, "साम्यघटनप्रकारः, कथमिति चेत्, "सा-

स्यम्भोगमात्रे, (४।४।२१) सायुज्यमुक्त्युक्तिश्च अस्यैवम्, न सर्वथा साधर्म्यम्, जगद्व्यापाराऽभावात्, (४।४।१७) जगन्नियमनादीनि न सन्ति-चेत्, भोगसाम्यघटनप्रकारः कथमिति चेत्, तेषामुभयोरपि साम्येन अनुकूलतया प्रकाशनात् घटते, "अशरीरं वा वसन्तं न प्रियाऽप्रिये स्पृशतः" (छा० ८।१२।१) इत्युक्तप्रकारेण शरीरशून्यस्य कैङ्कर्यं न घटत इति चेत्, (४।४।१०) "स एकधा भवति, द्विधा भवति" (छा० ७।२६।२) इति स शरीर इति कथनात् घटते, (४।४।१५।१३) (अनेन स शरीरत्वं सिद्धम् पा०) "अशरीरम्" इति कर्मकृतशरीरमस्य नेत्यर्थः, "न ह वै शरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ति" (छा० ८।१२।१) इति, शरीरविशिष्टश्चेत्, सुखदुःखे किं न भवत इति चेत्, तत्रोक्तं कर्मकृतशरीरम्,। शरीरञ्चेत् कर्मकृतमेव भवतीति वक्तुं न शक्यते, भगवत् विग्रहस्य कर्मकृतत्वाऽभावात्, तस्य सर्वशक्तित्वेन, सत्यसङ्कल्पत्वेन तादृशशरीर सम्भवेऽपि अस्य तन्न घटत इति न वक्तव्यम्, तत् सङ्कल्पेन अस्याऽपि तद्घटनात्, "सङ्कल्पादेवाऽस्य पितरः

समुत्तिष्ठन्ति" (छा०८।२।१) इति, सत्यसङ्कल्पत्वेन कथनात् अस्य सङ्कल्पादपि शरीरं घटते (सू० ४।४।८।९) अनेन स शरीरत्व मपि सिद्धम्, ईश्वरस्य सत्यसङ्कल्पत्वेन पुनरावृत्तिरपि घटेतेति चेत्, (तन्न घटते०पा०) "प्रियोहि ज्ञानिनोऽत्यर्थम्" (गी०७।१७) "स महात्मा सुदुर्लभः" (गी० ७।१९) इति वक्तुरीश्वरस्यैतत्संसरणाऽघटनात्, संसारहेतुभूतकर्मणां निरवशेषनिवृत्ते(श्च):, "नच (स) पुनरावर्त्तते" (छा०८।१५।१) "इमं मानवमावर्त्तं नावर्तन्ते" (छा०४।१५।६) "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमाङ्गतिम्" (गी० ८।१५) "मा मुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" (गी० ८।१६) इत्युक्तेश्च, पुनरावृत्तिप्रसङ्ग एव नास्ति (४।४।२२ सूत्रार्थः)।

(१५) तस्मात् सविभूतिकसमस्तकल्याणगुणात्मकपरमात्मयाथात्म्याऽनुभवजनितप्रीतिकारितकैङ्कर्यमेव (परमः) पुरुषार्थः ।

(१६) एतत्पुरुषार्थस्य प्रतिबन्धकः सन्, एवं परमात्मयाथात्म्याऽनुभवेन, निरतिशयाऽऽनन्दयोग्य अ-

त्मा, ईश्वरीयस्वरूपरूपगुण विभूतिचेष्टितानि, स्व-
स्वरूपयाथात्म्यञ्च अज्ञात्वा, स्वस्वरूपविपरीतेषु
क्षणक्षरणस्वभावत्वादि(हेय)धर्मविशिष्टेषु, नानावि-
धदेहेषु आत्मबुद्धिं कृत्वा, देहानुबन्धिनो भग-
वदीयांश्च सन्तो गृहक्षेत्ररामादीन् आत्मीयान्,
तान् भगवदीयत्वाऽऽकारेण विना, स्वातन्त्र्येण
भोग्यांश्च ज्ञात्वा तल्लाभाऽनुकूलेषु रागं(:) तत्प्र-
तिकूलेषु द्वेषञ्च कृत्वा, (विधाय ङ० पा०)
तल्लाभसाधनेषु परस्तोत्रपरहिंसादेवतान्तरभज-
नेषु अन्वीय, तेन नानाविधशरीराणि परिगृह्य बा-
ल्ययौवनवार्धक्यादि अवस्थासु, आध्यात्मिकादि-
तापत्रयतप्तः, मरणदशायां याम्यकिङ्करपीडितः,
दुःखेन शरीराणि विहाय, यातनाशरीरेषु प्रविश्य,
रौरवादि-नरकान् गत्वा, नानाविधदुःखान् अ-
नुभूय, धूमरात्र्यपरपक्षदक्षिणाऽयन पितृलोका-
काशचन्द्रक्रमेण उपरितनलोकेषु गत्वा, नार-
किदर्शननैरन्तर्येणाऽधिकदुःखाऽनुभवेन, असुर-
राक्षसपीडया, पतनभयेन च दुःखबहुलानि सुखा-
नि अनुभूय, पुनर्जन्यपृथिवीपुरुषयोषित्स्थानेषु ना-
नाविधदुःखानि चक्रनेमिक्रमेण यथाऽनुभवति तथा

समुत्तिष्ठन्ति" (छा०८।२।१) इति, सत्यसङ्कल्पत्वेन कथनात् अस्य सङ्कल्पादपि शरीरं घटते (सू० ४।४।८।९) अनेन स शरीरत्व मपि सिद्धम्, ईश्वरस्य सत्यसङ्कल्पत्वेन पुनरावृत्तिरपि घटेतेति चेत्, (तन्न घटने०पा०) "प्रियोहि ज्ञानिनोऽत्यर्थम्" (गी०७।१७) "स महात्मा सुदुर्लभः" (गी० ७।१९) इति वक्तुरीश्वरस्यैतत्संसरणाऽघटनात्, संसारहेतुभूतकर्मणां निरवशेषनिवृत्ते(श्च)ः, "नच (स) पुनरावर्त्तते" (छा०८।१५।१) "इमं मानवमावर्तं नावर्तन्ते" (छा०४।१५।६) "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमाङ्गतिम्" (गी० ८।१५) "मा मुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" (गी० ८।१६) इत्युक्तेश्च, पुनरावृत्तिप्रसङ्ग एव नास्ति (४।४।२२ सूत्रार्थः)।

(१५) तस्मात् सन्निभूतिकसमस्तकल्याणगुणात्मकपरमात्मयाथात्म्याऽनुभवजनितप्रीतिकारितकैङ्कर्यमेव (परमः) पुरुषार्थः।

(१६) एतत्पुरुषार्थस्य प्रतिबन्धकः सन्, एवं परमात्मयाथात्म्याऽनुभवेन, निरतिशयाऽऽनन्दयोग्य अ-

त्मा, ईश्वरीयस्वरूपरूपगुण विभूतिचेष्टतानि, स्वस्वरूपयाथात्म्यञ्च अज्ञात्वा, स्वस्वरूपविपरीतेषु क्षणक्षरणस्वभावत्वादि(हेय)धर्मविशिष्टेषु, नानाविधदेहेषु आत्मबुद्धिं कृत्वा, देहानुबन्धिनो भगवदीयाश्च सन्तो गृहक्षेत्रारामादीन् आत्मीयान्, तान् भगवदीयत्वाऽऽकारेण विना, स्वातन्त्र्येण भोग्यांश्च ज्ञात्वा तल्लाभाऽनुकूलेषु रागं(:) तत्प्रतिकूलेषु द्वेषञ्च कृत्वा, (विधाय ङ॰ पा॰) तल्लाभसाधनेषु परस्तोत्रपरहिंसादेवतान्तरभजनेषु अन्वीय, तेन नानाविधशरीराणि परिगृह्य बाल्ययौवनवार्धक्यादि अवस्थासु, आध्यात्मिकादितापत्रयतप्तः, मरणदशायां याम्यकिङ्करपीडितः, दुःखेन शरीराणि विहाय, यातनाशरीरेषु प्रविश्य, रौरवादि-नरकान् गत्वा, नानाविधदुःखान् अनुभूय, धूमरात्र्यपरपक्षदक्षिणाऽयन पितृलोकाकाशचन्द्रक्रमेण उपरितनलोकेषु गत्वा, नारकिदर्शननैरन्तर्येणाऽधिकदुःखाऽनुभवेन, असुरराक्षसपीडया, पतनभयेन च दुःखबहुलानि सुखानि अनुभूय, द्युपर्जन्यपृथिवीपुरुषयोषित्स्थानेषु नानाविधदुःखानि चक्रनेमिक्रमेण यथाऽनुभवति तथा

करोति कर्मसम्बन्धः।

(१७) "अनृतेन हि प्रत्यूढाः"(छा० ८।३।२)"तस्मिन् च अन्ये(न्यो) मायया सन्निरुद्धः" (श्वे० ४।९) "मम माया दुरत्यया" (गी० ७।१४) "वस्त्वस्ति किम" (वि० पु० २।१२।४१) "महीघटत्वम्" (वि० २।१२।४२) "तस्मात् न विज्ञानमृतेऽस्ति किञ्चत्" (वि० २।१२।४३) "ज्ञानं विशुद्धम्" (वि० २।१२।४४) "सद्भाव एवम्" (वि० ,, ,, ४५) इती श्रुतीतिहासपुराणेषु अनृत-माया-[अन्यथात्वम्]-नास्ति- असत्यमित्यादिभिः शब्दैः कथनात् मिथ्याभूतं अज्ञानं बन्धहेतुः बन्धश्च मिथ्याभूत इति केचन अभिदधुः, (शंकराचार्याः) तदनुपपन्नम्, तत्र प्रमाणाऽभावात्, अनेकप्रमाणबाधितत्वाच्च।"अनृत" शब्देन कथ्यमानं सांसारिकफलहेतुभूतं कर्म। ऋतेतर मनृतम् ऋतम् कर्मफलम् "ऋतं पिबन्तौ" (कठो० १।३।१) इत्युक्तेः "एतं ब्रह्म लोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः" (छा० ८।३।२) इत्यत्र "अनृत"मित्युच्यमानं भगवत्प्राप्तिविरोधि कर्म "माया" इत्युच्यमाना प्रकृतिः "मायान्तु प्रकृतिं वि-

घात" (श्वे० ४।१०) इत्युक्तेः प्रकृतिर्मायेत्युच्यते, विचित्रकार्यकरणात् । "वस्त्वस्ति किं"मित्यादिश्लोकैः, विनाशः कथ्यते, न मिथ्यात्वम् मिथ्याभूतञ्चेत् शुक्तिकारजतमिव, रज्जुसर्प इव बाधितं भवेत् "मृत्तिकेत्येव सत्यम्" (छा० ६।१-४)"सर्वं मे तत् ऋतं मन्ये यन्मां वदसि केशव" (गी० १०।१४) "कालस्य हि च मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकः सत्यमेतत् ब्रवीमि ते" (भार० उद्यो०६७।१२) "सत्यं सत्यं पुनः सत्यमुद्धृत्य भुज मुच्यते । वेदशास्त्रात् परं नास्ति न दैवं केशवात् परम्" (नृसिंह पु० १८। ३३) इत्यादि प्रमाणैश्च विरुध्येत । तस्मात् बन्धो बन्धहेतुश्च पारमार्थः ।

(१८) "तत्त्वमसि" (छा० ६।८७) "अयमात्मा ब्रह्म" (बृ० ६।४५) इति ब्रह्मणा जीवस्य च तदात्म्यकथनात् ब्रह्मैव संसरति इति उक्तिरपि असङ्गता, ब्रह्म नित्यनिर्दोषं, समस्तकल्याणगुणात्मकं, जीवात् विलक्षण,मिति कथयद्भिः, "अपहत पाप्मा" (छा० ८।१।५) "यः सर्वज्ञः" (मुण्डो० १।१।१०) "पृथक् आत्मानम्" (श्वे-

ता० १।६) इत्यादिशास्त्रैर्विरोधात्, "तत् त्व मसि" इत्यादि वाक्येषु शरीरशरीरिभावं वदति तस्मात्, "तस्मिन् चान्यः" "तयोरन्यः पिप्पलं स्वाद्वत्ति" (मुण्डो ३।१।१) "ईश्वर(ः) प्रेरितः" इत्युक्तप्रकारेण जीवः संसरति ।

(१९) इतः परं बन्धनिवृत्त्युपायः, न्यास-त्याग-निक्षेप-शरणागत्यादिशब्दवाच्यं सत्यवचनादिधर्मवत् सर्वाऽधिकारं परमात्मप्रपदनम् ।(३।३।५६)। तच्च भगवदाज्ञातिवर्तननिवृत्ति(ः), भगवदानुकूल्य- सर्वशक्तित्वाऽनुसन्धानप्रभृति- सहितः, याञ्चागर्भो, विजृम्भरूपज्ञानविशेषः। तत्र ज्ञेयाकार ईश्वरस्य निरपेक्षसाधनत्वम् ज्ञानाकारो व्यवसायात्मकत्वम् । एतच्च शास्त्रार्थत्वात् सकृत्कर्तव्यम् "मुमुक्षुर्वै शरण महं प्रपद्ये" (श्वे० ६।१८) "तस्मात् न्यासमेषां तपसामतिरिक्तमाहुः" (तै० ५०) "त्वामेव शरणं प्राप्य" (जित० १।४) "अहमस्मि अपराधानाम्" (अहिर्बुध्न सं० ३६-३४) "अनन्यसाध्ये स्वाभीष्टे" (विष्वक्सेनसं०) "यत् येन कामकामेन" (अहि० सं० ३६।२९) "यानि निःश्रेयसार्थानि चोदितानि तपांसि वै । तेषां

न्तु तपसां न्यासं अतिरिक्तं तपः श्रुतम्" (अहि० सं० ३६।४०) "भव शरणम्" (वि० पु० ३-७।३२) "सकृत् एव प्रपन्नाय" (रामाय० युद्ध० १८।२४) "मामेकं शरणं व्रज" (गी० १८।६०) इत्यादीनि अत्र प्रमाणानि एतदधिकारिणः परमप्राप्यतृष्णा, प्राप्यान्तरवैतृष्ण्य, भगवदौदार्यगुणाऽध्यवसायविशिष्टाः, अस्य चाऽऽकिञ्चन्यम्, अस्य चाऽधिकारी प्रपत्त्यनुष्ठानाऽनन्तरमेव मोक्षो मे भूयात् इति स्थितश्चेत्, तदैव फलं भवति, उपायस्य तदैव निष्पत्तेः, "साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्याऽपि भूयसी" (पाञ्चरात्रे) इति प्रारब्धस्याऽपि नाशाच्च। तदभावदशायाम्, "मा शुचः" इत्युक्तिर्न घटते, एवमार्तौसत्यामपि केषाञ्चित् स्थितिः ईश्वरेच्छया, तस्य प्रयोजनम् संसारिसंरक्षणविग्रहाऽनुभवप्रभृतिकानि, प्रपत्त्युत्तरकालेऽपि संसारे सङ्गाऽनुवृत्तिश्चेत् सङ्गनिवृत्तिपर्यन्तं स्थापयति, तर्हि दुःखांशापनोदनाभावः किं निबन्धन इति चेत्, ईश्वरस्य हितपरत्वेन वैराग्यजननार्थं स्थापयति।

(२०) इदञ्च न स्वातन्त्र्येणैव कार्यकारणमिति, किन्तु

भक्तियोगमुत्पाद्य कार्यं करोति, भक्तिश्च, "भक्त्या त्वनन्यया" (गी० ११।५४) "यं एव एप वृणुते" (मुण्ड० ३।२।३) "भजतां प्रीतिपूर्वकम्" (गी० १०।१०) "प्रियो हि ज्ञानिनः" (गी० ७ १७) इत्युक्तप्रकारेण, स्मर्तव्यविषयस्य प्रियतमत्वेन स्वयमपि अत्यर्थप्रियो, भावनाप्रकर्षेण, "तस्मिन् दृष्टे" (मुण्ड०।२।२।९) "आत्मा वा अरे द्रष्टव्यः" (बृ० ६।५।६] इत्युक्तप्रकारेण प्रत्यक्षसमानाकारः, "ध्रुवा स्मृतिः" (छा० ८।२६।२) इत्युक्तप्रकारेणाऽविच्छिन्नस्मृतिरूपश्च ध्यानविशेषः। (ब्र० सू० ४।१।१) इदञ्च प्रतिदिनमभ्यासाऽतिशयेन। "स खलु एवं वर्तयन् यावदायुषम् ब्रह्मलोकमभिसम्पद्यते" (छा० ८।१५।१) इत्युक्तप्रकारेण आप्रयाणमननुवृत्ता चेत्, कार्यकारिणी न भवति। (४।१।१२) एवं भूतध्याननिष्पत्तिः, "यज्ञेन दानेन तपसानाशकेन ब्राह्मणा विविदिषन्ति" (बृ० ६।४।२२) "यज्ञदानतपःकर्म न त्याज्यम्" (गी० १८।५) "स्वकर्मणा तमभ्यर्च्य" (गी० १८।४६) इत्युक्तप्रकारेण भगवत्समाराधनरूपेण, फलाऽभिसन्धिविधुरेण, नित्य-

नैमित्तिककर्माऽनुष्ठानेन, "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येव आत्मानं पश्येत्" (बृ० ६।४।२३) इत्युक्तशमदमादिभिश्च। (३।४।२६।२७) [अनेन] उक्तकर्माऽनुष्ठानेन, "धर्मेण पापमपनुदति" (तै०५०अनु०) इत्युक्तरीत्या पुण्यपापे नश्यतः, तेन रजस्तमसो भैस्त(नत)शिरसोः सत्त्वमुद्भूतं भवति, तेन ध्यानं निष्पन्नं भवति, (३।४।३५)

(२१) एवमव्यवहितं व्यवहितञ्च परमात्मप्रपदनमेव प्रतिबन्धकनिवर्तकम् ।

(२२) केचन, "तत् त्वमस्या"दिवाक्यजन्यवाक्यार्थज्ञानमेव उपायमाहुः, (शङ्कराचार्याः) तत् अनुपपन्नम्, ध्यानादिविधीनां वैयर्थ्यप्रसङ्गात्, अनन्तरं मुक्तत्वप्रसङ्गाच्च, मुक्तश्चेत् अस्य सुखदुःखाऽनुभवो न भवेत्, ज्ञान(मात्र)मविधेयमपि भवेत् ।

(२३) (केकय)जनकादीनाम् कर्मनिष्ठत्वात्, "कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः" (ईशावा० २) इति यावज्जीवं कर्माऽनुष्ठानकथनाच्च कर्मैव पुरुषार्थसाधकम्, तस्य च कर्मणो ऽनुष्ठा-

नदशायाम्, देहातिरिक्तस्य आत्मनो ज्ञेयत्वात्, ज्ञानं तदङ्गमिति केचन अभिदधुः, (भाट्टप्रभाकरादयः) (३।४।७) तत् अप्यनुपपन्नम्, (३-४।८) "किमर्थं वयं यक्ष्यामहे" इति ज्ञानवतः कर्मत्यागदर्शनात्, (३।४।९) अग्निहोत्रदर्शपौर्णमासादिशून्यानाम्, ऊर्ध्वरेतसां, ब्रह्मनिष्ठोत्पत्तेः, (३।४।१७) "किं प्रजया करिष्याम" (बृ०)इति विरक्तस्य गार्हस्थ्यत्यागसद्भावात, (३।४।१५) "क्षीयन्ते चाऽस्य कर्माणि" (मुण्ड० २।२।५)इति विद्यया पुण्यपापयोर्नाशोत्पत्तेश्च, (३।४।६) विद्यायाः कर्माङ्गत्वाऽभावात् । विद्यानिष्ठः कर्माऽनुतिष्ठति इत्येतत् किमिति चेत्, विद्याम्प्रति कर्मणोऽङ्गत्वात् अनुतिष्ठति, यावज्जीवकर्माऽनुष्ठानकथनञ्च अविरक्तानाम्, (३।४।१७भा०)

(२४) ज्ञानकर्मसमुच्चय उपाय इति पक्षोऽप्यनुपपन्नः, (यादवप्रकाशः) "अविद्यया मृत्यु तीर्त्वा" (ईशा० ११) "यज्ञेन दानेने"ति कर्मणो ज्ञान-(विद्या)विशेषत्वेन विनियोगात् ।

(२५) ननु प्रपत्तिः स्वतन्त्रोपायश्चेत्, "नान्यः पन्था" (श्वे० ३।८) इति भक्तिं विना उपायो नास्तीत्य-

नेन किं न विरुध्येतेति चेत्, प्रपत्तेरपि ज्ञानविशेषत्वेन न विरुध्येत, गुरु लघ्वोर्विकल्पघटनप्रकारः कथमिति चेत्, "उपायः सुकरः सोऽयं दुष्करश्च मतो मम"(विष्वक्०सं०)ति अध्यवसायगौरवेण प्रपत्तेरपि गुरुत्वात् घटते, लघुत्वे ऽपि भक्त्यङ्गेषु कर्मसु (कर्तव्येषु कर्मसु) शाखाभेदेन, वर्णाश्रमभेदेन च गुरुलघूपाय(घुभाव) सद्भावेऽपि विकल्पघटनमिवाऽत्राऽपि विकल्पो घटते, उपायान्तरनिषेधः, [गुरुलघुविकल्पौ], अङ्गाऽङ्गिभावः, विषयभेदश्च, अधिकारिभेदप्रभृतितो घटेत ।

(२६) (१)अखिलभुवनजन्मस्थेमभङ्गादिलीलस्य, विधिशिवशतमखप्रमुखनिखिलदेवतानिर्वाहकस्य,—(प्रथमप्रकरणस्यार्थः संक्षिप्तः)

(२) मुमुक्षूपास्यस्य, मोक्षप्रदस्य, श्रीमन्नारायणस्य—(२ प्रकरण०)

(३) देहेन्द्रियादिविलक्षणाः, सर्वेऽप्यात्मानः, सर्वप्रकारपरतन्त्राः । (३ प्रकर०)

(४) तेषां स्वरूपाऽनुगुणपुरुषार्थः, सकलबाह्यकुदृष्टिदृष्टमोक्षविलक्षणपरमात्मकैङ्कर्यम्, तत् प्र-

तिवन्ध की[ भूतानाल्पाचितानन्ताज्ञातिलङ्घन-
जनितभगवन्निग्रह ]निवर्हणोपायः, निखिलज-
न्तुजातशरण्य, श्रीमन्नारायणचरणारविन्दशर-
णागतिः, इति ज्ञानम् (विशेषः) तत्त्वज्ञानं
भवति, (४ प्रक०)

इति श्रीरामानुजसिद्धान्तसारार्थनिर्णयसमर्थ-
श्रीभगवल्लोकाचार्यकृतिषु [1]अष्टादशरहस्येषु,
तत्वशेखरनामाऽयं ग्रन्थः समाप्तः ।

प्राप्यभूतपरब्रह्माद्यर्थपञ्चकनिर्णयः ।
तत्वशेखरनामाऽयं लोकाचार्येण दर्शितः (ख)॥
सर्वजनरक्षणेच्छुः समकृत यस्तत्वशेखरग्रन्थम् ।
तद्भुवनदेशिकश्रीचरणद्वन्द्वं सदैव शरणम्मे(ङ) ॥
भवार्णवनिमग्नाय प्लवरूपमिदं कृतम् ।
लोकार्येण महार्यन्तं भजामि वरदांशजम् ॥

---

१ मुमुक्षुप्पडि ॥ (१) प्रमेयशेखरम् ॥ ६ ॥ नवरत्नमाला ॥ ११ ॥
तनिप्रणवः ॥ १६ ॥ तत्वत्रयम् ॥ (२) प्रपन्नपरित्राणम् ॥ ७ ॥
यादृच्छिकप्पडि ॥ १२ ॥ "द्वयम् ॥ १७ ॥ अर्थपञ्चकम् ॥ (३)
सारसङ्ग्रहः ॥ ८ ॥ परन्दपडि ॥ १३ ॥ श्रीवचनभूषणम् ॥ ४ ॥
संसारसाम्राज्यम् ॥ ९ ॥ श्रियःपतिप्पडि ॥१४॥ "चरमम् ॥१८॥
अर्चिरादि ॥ ५ ॥ नवविधसम्बन्धम् ॥ १० ॥ तत्वशेखरम् ॥ १५ ॥

# शुद्धाऽशुद्धपत्रिका ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ६ | १ | शातपथ- | शतपथ |
| ,, | १४ | "उन्मत्तवत्"इत्यस्याधः | शिवपुराणेऽपि सनत्कु-सं० ३० इति टिप्पण्यपेक्षिता । |
| ,, | १७ | घात- | घ्रात- |
| ,, | २२ | स्वम् | त्वम् |
| ८ | ६ | हुतम् | हृतम् |
| ९ | १८ | ( रुद्रं ) | ( रुद्रः ) |
| १० | १४ | इत्युक्तरीत्याभगवतो हुङ्कारेण | इत्याद्युक्तरीत्या'तदस्तगतन्धनुस्वनस्य बाणं सन्धातुमपि अशक्त , "तदा जृम्भितं चैवन्धनुर्भीमपराक्रमम् । हुङ्कारेण महादेव स्तम्भितोऽथ त्रिलोचनः (रामा० बा० ७५-१८) इत्युक्तरीत्या भगवतो हुङ्कारेण. |
| १२ | ८ | वच्छम | सच्छम |
| १४ | ९ | विधयसे | विधत्ते |
| १५ | २० | ,, | विष्णुधर्मं इत्यनन्तर मुपरितनपङ्क्तिवाक्यानि ( मार्कण्डेये ) त्यादीनि पठितव्यानि |
| १९ | १३ | सर्वेश्वरम् | सर्वेश्वरम् |
| ,, | ३ | अर्द्धं | अर्द्धं. । शिवपु० वायुसं० उत्तर० ९-२. |
| २८ | ७ | "निर्धारिताच" | शिवपु०धर्मसं-७-२०१ |
| २९ | १७ | मदात्मानः | महात्मानः |
| ,, | १९ | भगद्भवन्ती | भवन्ती |
| ३० | १ | फाहतु | दद्भकास्तु |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १९ | त्रिपुण्ड | त्रिपुण्ड्र |
| ३४ | १९ | यत् देतत् | यद्देतत् |
| ३५ | १५ | पृष्टः | पृष्टे |
| ,, | २१ | सोपि | शोपि |
| ३६ | ५ | न प्रमातु- | वायुपु० उत्तर० ३६-९५ |
| ३८ | ५ | ज्ञेयो ह्मर्थस्यैव अहि | ज्ञे अहमर्थस्येव हि |
| ३९ | ४ | नघघटेत | न घटते |
| ,, | ६ | उपलल | उपल- |
| ,, | ७ | पर्स्यै | पस्य |
| ४६ | १३ | भवति | भवति |
| ४९ | ३ | प्रेरणे | प्रकारणे |
| ५१ | ९ | ज्ञाताऽऽयाप्य | ज्ञानऽऽयाप्त्या |
| ५२ | ६ | ( प्रतिपाद ) | [ प्रतिपादक ] |
| ५६ | १५ | जीवेवेन | जीवेन |
| ,, | १९ | स सर्वं | सर्वं |
| ५७ | १६ | कथेन | कथने |
| ५८ | १४ | क | के |
| ५९ | १ | उक्तयुक्तिः | इत्युक्तिः |
| ,, | २ | अस्येवम् | अस्येव |
| ६१ | १ | विभूति | विभूति |
| ,, | ५ | क्षेत्रराम | क्षेत्रा ऽऽराम |
| ६२ | ७ | किञ्चत | किञ्चित् |
| ६३ | १६ | तदात्म्य | तादात्म्य |
| ६४ | ४ | "ईश्वरप्रेरितः" | शिवपु०वायुसं-पूर्वा०४ ६२ |

अन्यदपि ज्ञेयम् सुजनैः ।

श्रीहयग्रीवाय नमः।
नमः परमर्षिभ्यः।
कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः
# तत्त्वत्रयचुलुकसंग्रहः ।

---

## प्रथमप्रकरणम्।

श्रीमत्त्रय्यन्तसिद्धान्तगुरुपुमेण वर्ण्यते।
सत्त्वोत्तरमसाथार्थं तत्त्वत्रयनिरूपणम् ॥ १ ॥
पतिपतिमतनिष्ठान्पामुनार्यप्रबन्धै-
रधिगतपरमार्थानास्तिकान् प्रीणयिष्यन्।
चिदचिदधिपतीनां चिन्तनाय प्रबन्धं
व्यतनुत वरदार्यः सर्वतन्त्रस्वतन्त्रः ॥ २ ॥

श्रीमतो नारायणस्य चरणावुपायत्वेनोपेयत्वेन चाधिगच्छता प्रथमं प्रकृत्यात्मभ्रमादिनिवृत्त्यर्थं तत्त्वत्रयनिरूपणं कर्तव्यमेव। तत्त्वत्रयमिति अचेतनद्रव्यं जीव ईश्वरश्चेति कथ्यते॥ तत्र तत्त्वमिति प्रामाणिकं वस्त्वभिधीयते। तच्च द्विविधं द्रव्यमद्रव्यं चेति। द्रव्यं च पुनर्द्वेधा विभज्यते। जडाजडभेदात्। जडं पुनरव्यक्तं काल इति द्वेधा भवति। अजडं तु प्रत्यक् पराक् चेति द्विविधं भवति। प्रत्यग्वस्तु च जीव ईश्वरश्चेति द्विविधम्। पराग्वस्तु धर्मभूतज्ञानं नित्यविभूतिरिति प्रकारद्वैविध्यमनुभवति। एवं विभक्ताद्द्रव्यपदार्थादर्थान्तरं सर्वमद्रव्यमिति परस्परविभागः। तत्राद्रव्यं दशविधं सत्त्वं रजस्तम शब्दस्पर्शरूपरसगन्धाः संयोगः शक्तिरिति। तथा चाव्यक्तकालजीवेश्वरनित्यविभूतिधर्मभूतज्ञानानि द्रव्यरूपेण षट्

अद्रव्यमेकमिति सप्तप्रकारतयानुसन्धेये प्रामाणिके पदार्थे संग्रहरूपेण तत्त्वत्रयात्मना सर्वमप्यनुसन्धीयते मनीषिभिः । यतः सर्वस्यापि पदार्थस्य तत्त्वत्रयान्तर्भावात्(वः) । अत्र नित्यविभूतेस्तेजोरूपमात्रत्वमेव न पुनः स्वयंप्रकाशत्वमित्येकदेशिना पन्थाः । सर्वमप्येतदुक्तमाचार्यैः "द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहुर्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ । अन्त्यं प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदान्नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः" ॥ द्रव्यादीनां लक्षणं तैरेव हि निरूपितं "तत्र द्रव्यं दशावत् प्रकृतिरिह गुणैः सत्त्वपूर्वैरुपेता कालोऽब्दाद्याकृतिः स्यादणुरवगतिमान् जीव ईशोऽन्य आत्मा । सम्प्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव ज्ञातुर्ज्ञेयावभासो मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म" ॥ तत्राचेतनं नाम ज्ञातृत्वरहितं वस्तु । एतस्याचेतनस्य व्यापारसद्भावेऽपि ज्ञातृत्वाभावात् बुद्धिपूर्वकप्रवृत्तिलक्षणं कर्तृत्वं भोक्तृत्वं च न विद्यते । अचेतनद्रव्यं त्रिगुणं कालः शुद्धसत्त्वमिति त्रिप्रकारम् । धर्मभूतज्ञानस्य त्रिगुणवदचेतनत्वे सत्यपि चेतननिरूपणे तद्विशेषणतया निरूपणीयत्वात् एतेषां त्रयाणां निरूपणस्य प्रयोजनाभिप्रायसद्भावाच्चैतानि त्रीण्येव विभज्य दर्शयन्ति सन्तः । तत्र त्रिगुणनिरूपणं पञ्चविंशकविवेकादावुपयुज्यते । कालनिरूपणं पुनरैश्वर्यादीनामनित्यत्वाध्यवसाये कालानधीनपुरुषार्थविशेषप्रार्थनायां कालोचितकर्तव्यविशेषस्य यथाकालं चिन्तनायामप्युपयुज्यते । शुद्धसत्त्वस्य निरूपणं तु प्राप्यप्रापकभूतपरमपुरुषविशिष्टाकारवेदने विशेषणविषयत्वेन निविशते ॥ तत्र त्रिगुणं सत्त्वरजस्तमोरूपगुणत्रयाश्रयभूतं द्रव्यम् । एतत्तु

कर्मवश्यानां भगवतः स्वरूपतिरोधानादिकं करोति ॥ सत्त्वादित्रिषु गुणेषु सत्त्वं प्रकाशादिहेतुर्गुणविशेषः । एतच्च सत्त्वं केषांचिदत्यन्तातिशयितं सन्मोक्षोपयुक्तं भवति । रजस्तु रागदुःखादिहेतुर्गुणविशेषः। तमस्तु पुनः प्रमादालस्यनिद्राहेतुः। नियतकालभूतस्वतन्त्रसङ्कल्पविशेषेण त्रयाणामपि गुणानां साम्येऽप्यनः । एकशरीरावस्थितवातपित्तकफवत् । तेषामुत्कर्षाभिभवादिभेदेन वैषम्ये महदादिसृष्टिः। एतेषु वैषम्यमवान्तरप्रलयम्॥परस्परसमरूप(सरूप)गुणत्रयाश्रयभूत द्रव्य प्रकृतिरिति।अत्र"त्रिगुण तज्जगद्योनिरनादिप्रभवाप्ययम । अचेतना परार्था च नित्या सततविक्रिया ॥ त्रिगुणं कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते" इत्यादि प्रमाणजातं द्रमिडोपनिषदाचार्यवाक्यानि च यथायथमनुसन्धेयानि । प्रकृतावेव प्रमाणानुसारेण सूक्ष्मपरिणामविशेषैरव्यक्ताक्षरतमोरूपावस्थाभेदानुसन्धेयः । एतदेव द्रव्यं विषमपरिणामदशायां व्यक्तमिति नामान्तरेण कथ्यते । व्यक्तं पुनर्महदहङ्कारमारभ्य पृथिवीपर्यन्तं चतुर्विंशतिप्रकारम् । एवं त्रिगुणात्मके प्रधाने परिणामवान् तद्विधुरश्च प्रदेशः समुद्रजले चलिताचलितप्रदेशवदास्थीयते । महदादिविकारविधुरोपि प्रधानप्रदेशो प्रलयदशायामिव सृष्टिदशायामप्यतिसूक्ष्मादशो विकारसन्तानः सन्तन्यते ॥ विषमविकारेषु प्रथमविकारो महान् । अयं च महानात्मनो जीवस्य मनस्यध्यवसाय जनयति । स्वयं तत्सहकारित्वात् "महान् वै बुद्धिलक्षणः" इत्युच्यते । अस्य च महतो गुणवैषम्येन सात्त्विको राजसस्तामसश्चेति त्रिविधो भेदो भवति ॥ एतास्वनुत्पन्नेषु विकारेषु प्रथमविकारविशेषस्त्वहङ्कारः । अयमहङ्कारः पुनरात्मनो मनसि देहविषयाहंबुद्धिमुत्पादयति । स्वयं तत्सहकारित्वादहङ्कार

इत्यभिधीयते। अयं चाहङ्कारः स्वकारणभूतमहत्तत्त्ववदेव क्रमेण सात्त्विकराजसादिभेदमनुभवति। तेषु चाहङ्कारभेदेषु सात्त्विकाहङ्कारो वैकारिकः राजसाहङ्कारस्तैजसस्तामसाहङ्कारो भूतादिरिति विभज्य कथ्यते। एषोऽप्विन्द्रियादिर्वैकारिको भूतादिस्तामसः। एतयोश्च सात्त्विकतामसयोरहङ्कारयोः प्रवर्तकतया सहकारी राजसाहङ्कारः॥ सात्त्विकाहङ्कारादुत्पन्नमिन्द्रियजातमेकादशविधं प्रतिपत्तव्यम्। इदं चेन्द्रियजातमान्तरं बाह्यं चेति द्विविधम्। तत्रान्तरं मनः। इदं च संसारिणां संकल्पस्मृत्यादिषु स्वयमेव कारणम् बाह्येन्द्रियाणां विषयप्रवृत्तौ सहकारि च भवति। इदमेव क्वचित् क्वचिद्व्यपदेशेषु प्रत्यवसायाभिमानचिन्तारूपपुरुषबुद्धिविशेषकारणदशायां बुद्ध्यहङ्कारचित्तशब्दैरभिधीयते। इदं च मनः शब्दादिविषयसंगावस्थायां बन्धकारणम्। बाह्यविषयान् विमुच्य आत्मविषयभावण्ये सति अपवर्गकारणम्॥ एतेषु(बाह्येषु) चेन्द्रियेषु वाक्पाणिपादपायूपस्थात्मकानि कर्मेन्द्रियाणि। एतानि वचनादानविहरणोत्सर्गानन्दात्मकं कार्यं कुर्वन्ति। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मकानि ज्ञानेन्द्रियाणि शब्दस्पर्शरूपरसगन्धान् गृह्णन्ति। एतेषु च ज्ञानेन्द्रियेषु च त्वगिन्द्रियं चक्षुरिन्द्रियं च यथार्हं कानिचिद्द्रव्याण्यपि दर्शयतः। श्रोत्रादीनां पञ्चानामिन्द्रियाणां क्रमादाकाशादीनि पञ्चापि भूतान्याप्यायकानि पोषकानि। तथैव मनःप्राणवाचां क्रमेण पृथिव्यप्तेजोभिराप्यायनं श्रुतिसिद्धमनुभवसिद्धं च। "अग्निर्वाग्भूत्वा मुखं प्राविशत्। अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्"इति॥ तामसाहङ्कारात् क्रमेण शब्दादितन्मात्राण्यन्तरीकृत्य पञ्चभूतान्युत्पद्यन्ते। तत्रोत्पत्तिप्रकारं बहु[धा]वर्णयन्ति। केचि-

त्तामसाहङ्कारात्पञ्चापि तन्मात्राण्युत्पद्यन्ते पञ्चभ्योऽपि तन्मात्रेभ्यः क्रमेण पञ्चभूतानीति वदन्ति। अपरे पुनस्तामसाहङ्कारात्पञ्चापि(च्छब्द)तन्मात्रं शब्दतन्मात्रादाकाशः आकाशात्स्पर्शतन्मात्रं स्पर्शतन्मात्राद्वायुः वायोश्च रूपतन्मात्रं रूपतन्मात्रात्तेजः तेजसो रसतन्मात्रं रसतन्मात्राद्वापः अद्भ्यो गन्धतन्मात्रं गन्धतन्मात्रात्पृथिवीमाहुः।अन्ये तु "अष्टौ प्रकृतयः षोडश विकाराः"इतिश्रुत्यानुगुण्येन तामसाहङ्काराच्छब्दतन्मात्रं शब्दतन्मात्रादाकाशः स्पर्शतन्मात्रं चोपप(त्प)द्यते स्पर्शतन्मात्राद् वायुः रूपतन्मात्रं च भवति रूपतन्मात्रात्तेजसो रसतन्मात्रस्य तथैवोत्पत्तिः तथा रसतन्मात्रं जलगन्धतन्मात्रे सहैव जनयति गन्धतन्मात्रं पुनः पृथिव्याः कारणमिति पुराणप्रक्रियानुरोधेनैवोपपादयन्ति । एवमाकाशाद्वायुरिति श्रुतिच्छायानुरोधेन भूताद्भूतोत्पत्तिमपरेमाहुः। तत्र सर्वत्रापि समाधानं प्रधानोपसर्जनभावेन मन्तव्यम् । मन्तेवासिभिरत्र गौणमुख्यभावेनापि सर्वपक्षाविरोधोपपत्तिरिति मन्तव्यम् । अत्र च यथाप्रमाणं यथासंप्रदायं स्वयमेव बोद्धव्यं बुद्धिमद्भिः॥तन्मात्राणि पुनः क्षीरदध्नोरन्तराले कललपरिणामवत् परिणतानि सूक्ष्मभूतानि। तत्र गुणवैषम्येन तन्मात्राण्यविशेषाणीत्युच्यन्ते । तेनैव गुणवैषम्यान्तरेण भूतानि विशेषशब्देन निगद्यन्ते । तत्र वैषम्यं प्रसूनसौरभ्यन्यायेन सूक्ष्मस्थूलतया विभावनीयम् । आकाशादिषु पञ्चसु भूतेषु शब्दादीनां पञ्चानां गुणानामुत्तरोत्तरमेकैकाधिक्यमस्ति । तथा चाकाशे शब्दः वायोः शब्दस्पर्शौ तेजसः शब्दस्पर्शरूपाणि अपां शब्दस्पर्शरूपरसाः पृथिव्याः शब्दस्पर्शरूपरसगन्धाः पञ्चापीति विभागः । इह द्रव्यरूपाणां तन्मात्राणां तद्गुणानां च परस्परभेदे सत्यपि क्वचिद्गुणनामधेयेन तन्मात्रव्यपदेशः औ-

पचारिक इति मन्तव्यम् ॥ एतेषां महदादितत्त्वानामुत्पत्तिमपपे वैशेषिकादिवद्द्रव्यान्तरोत्पत्तिर्नास्त्यनुपलम्भात् । अनन्यथासिद्धहेत्वभावात् । श्रुतिविरोधाच्च । केवलताडपलास(?)नाट्कुन्यायेनावस्थान्तरापत्तिरेव भवति । नामान्तरसङ्ख्याव्यवहारधिषणाकारकालादिभेदोवस्थान्तरापत्त्यैव निर्व्यूढः । अन्यथा सेनावनराश्यादिव्यवहारोपि न सङ्घटते । न हि तत्र पूर्वावस्थाव्यतिरिक्तावस्थान्तरमन्तरेण द्रव्यान्तरोत्पत्तिं भवन्तोपि वर्णयन्ति । अतः पूर्वोत्तरावस्थाविशेषसम्बन्धमात्रेण कार्यकारणभेदव्यवहारः । अयमत्र विभागः । तन्तुपटात्मकं परस्परभिन्नं द्रव्यद्वयमिति नैयायिकादयः । कार्यकारणभूतयोस्तन्तुपटद्रव्ययोर्भेदाभेद इति साङ्ख्याः । वयं तु ब्रूमः कारणद्रव्यात्कार्यद्रव्यं नातिरिच्यते किन्त्वेकस्मिन्नेव द्रव्ये कार्यकारणावस्थे भवतः एते अवस्थे मिथो भिन्ने द्रव्याच्चाभिन्ने इति । तत्र पूर्वावस्थाप्रहाणेन विजातीयावस्थाप्राप्तौ तत्त्वान्तरव्यपदेशः । पृथिव्याद्यवस्थाप्रहाणाभावेनावान्तरावस्थानिरूपणमात्रेण न तत्त्वान्तरगणना ॥ तत्र महदादिपृथिवीपर्यन्तानि तत्त्वानि समष्टिरित्युच्यते । तेष्वेव तत्त्वेष्वेकदेशोपादानेन क्रियमाणानि कार्याणि व्यष्टिरित्युच्यन्ते । अत्राण्डावरणं तत्रैव चतुर्दशभुवनादिवैचित्र्याणि पञ्चीकरणप्रक्रियाविशेषाश्च पुराणादिषु विस्तरेण द्रष्टव्यानि ॥ इयं खलु पञ्चीकरणप्रक्रिया । पञ्चापि भूतानि सृष्ट्वा भगवान्पुरुषोत्तमः एकैकभूतं द्विविधं कृत्वा द्वयोर्भागयोः स्वभागमेकं निधाय भागान्तरं चतुर्धा करोति । तांश्चतुर्भागान् भूतान्तरेषु चतुर्षु योजयति । एवं सर्वेष्वपि भूतेषु क्रियमाणेष्वेकैकस्य भूतस्यार्धं स्वभागः अर्धान्तरं चतुर्णां भूतानां भागेषु समुच्चीयत इति भवति पञ्चीकरणम् । उक्तं

च "चतुर्भिः परभागैः स्यादर्धमर्धं स्वभागतः । इति पञ्चसु भूतेषु पञ्चीकरणमिष्यते" इति । तथाच स्वभागस्य भूयस्त्वा-त्परभागस्याल्पीयस्त्वाच्च पृथिव्यादिव्यपदेशनियमः । त्रिवृत्करणोपदेशस्तु पञ्चीकरणस्योपलक्षणम् इति भाष्ये एव प्रपञ्चितमेतत् ॥ एतेषु महदादिषु चतुर्विंशतिसङ्ख्यातेषु तत्त्वेषु पञ्चभूतानि प्रकृतिमहदहङ्काराः शरीरस्योपादानानि । एकादशेन्द्रियाणि प्रत्येकमनङ्ख्यातानि प्रतिपुरुषं भिन्नानि च । आ-मरणादिर्थि(हि)मरणान्तानीव शरीरमाश्रित्य तिष्ठन्ति । शरीरं नाम चेतनं प्रति आधेयत्वविधेयत्वशेषत्वनियमैरपृथक्सिद्धो द्रव्यविशेषः ॥ त्रिगुणविकारवर्गस्य सृष्टिप्रलयादिकालनियमः शास्त्रेषु द्रष्टव्यः । इत्थं प्रकृतिमहदहङ्कारेन्द्रियतन्मात्रपञ्चकभूतपञ्चकविभागेन चतुर्विंशतितत्त्वानि वर्णितानि ॥

अतः परं कालस्वरूपं निरूप्यते । कालो नाम गुणत्रयरहितोऽतीतानागतवर्तमानयुगपदयुगपच्चिरक्षिप्रादिव्यवहारहेतुर्द्रव्यविशेषः । क्षणमारभ्य परार्धपर्यन्तम् "कालचक्रम् जगच्चक्रम्" इत्याद्युक्तप्रकारेण चक्रवत्परिवर्तमानाः सर्वेऽप्येतस्यैव कालस्य विभागविशेषाः । विष्णोः स्वरूपात्परतोदिने(?) द्वे रूपान्तरं तद्विज कालसंज्ञम्" इत्यादिषु प्रमाणेषु प्रकृतिपुरुषाभ्यां कालस्य विभागो वर्णितः । एतत्प्रकारपरिशोधने "कृतेन भवतो जाता भूयसी जन्मसन्ततिः । तस्यामन्यतमं जन्म संक्षिप्य शरणं व्रज" इत्युक्तप्रकारेण स्वरूपमाप्त्युपायप्रवृत्तिः सम्भूते(?) सङ्घटते । तथा च सति "कालस्यापि च सर्वस्य जङ्गमस्थावरस्य च । ईशते भगवानेष सत्यमेतद्ब्रवीमि ते" इत्युक्तप्रकारेण सर्वनिर्वाहको भगवान् "कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । यस्य चेतसि गोविन्दो

हृदये यस्य नाच्युतः" इत्युक्तप्रक्रियया कलियुगाभावेन स्वयमेव स्वकिङ्करान् संरक्षते । लीलाविभूतिस्थविकारजातं सर्वमपि कालविशेषनियमेन सम्पद्यते । शुद्धसत्त्वस्वरूपे तु परमपदे कालनियमो न सम्पद्यते "न कालस्तत्र वै प्रभुः" इत्यादिवचनानुरोधेन केवलमीश्वरेच्छयैव सर्वं सम्पद्यति । उभयत्रापि कालस्येश्वरपारतन्त्र्यऽप्येकत्र भगवान्स्वसङ्कल्पितकालनियमानुरोधेन कार्यं करोति इतरत्र तन्नियमाभावेनेत्युक्तं भवति ॥

शुद्धसत्त्वं नाम रजस्तमोमिश्रप्राकृतसत्त्वविलक्षणसत्त्वगुणाश्रयो द्रव्यविशेषः । इदं च सत्त्वं स्वसत्ताभासकं द्रव्यं गुणसत्त्वाद्विलक्षणमित्यादि प्रमाणप्रसिद्धम् । श्रुतिरपि "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि । योऽस्याध्यक्षः परमे व्योमन् । तदक्षरे परमे व्योमन् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । क्षयं तमस्य रजसः पराके । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु । ते ह नाकं महिमानः सचंते यत्र पूर्वे साध्याः सन्ति देवाः । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इत्यादिः प्रमाणत्वेनानुसन्धीयते । तदुपबृंहणं च "तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः । वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह" इत्यादिकमनुसन्धेयम् । नैयायिकवैशेषिकादिभिः कौतस्कुतैरभिधीयमानानि बाधकानुमानानि नरशिरःकपालपवित्रत्वाग्नीषोमीयपश्वालम्भनधर्मत्वादिप्रतिपादकप्राणिहत्वहिंसात्वाद्यनुमानवदागमबाधेन कालात्ययापदिष्टत्वादनादरणीयानीत्यपक्षपातिभिः । तदनुमाननिरासप्रक्रिया तु श्रीभा-

ण्यादिषु विस्तरेणानुसन्धेया। इदं शुद्धसत्त्वद्रव्यं त्रिगुणकालव-
ज्जडात्मकमिति केचिदाहुः। अपरे तु "स्वमत्ताभासकं सत्त्वम्"
इत्यादि वचनानुरोधेन स्वयंप्रकाशरूपमिति वर्णयन्त्या-
चार्याः। आत्मनो धर्मभूतज्ञानस्य च स्वयंप्रकाशत्वे समानेपि
प्रमाणबलात्प्रत्यक्षविषयत्वादिवैषम्यवत् शुद्धसत्त्वस्यापि स्व-
यंप्रकाशत्वे सत्यपि तुल्ययोगक्षेमप्रमाणप्रसिद्ध मण्डपगोपुरा-
दिपरिणामादिकं सर्वमपि यथाप्रमाणमङ्गीकार्यम्। न खलु
साधर्म्यमात्रात्प्रमाणप्रसिद्धवैधर्म्यं प्रामाणिकैर्नाङ्गीक्रियते।
अन्यथा सर्वत्रापि वैधर्म्यविलोपादिप्रसङ्गात्। अत्र च शुद्धस-
त्त्वस्वरूपस्य भगवद्विग्रहस्य ज्ञानानन्दात्मकत्वम् "क्रियात्मको
भगवतो व्यक्तिर्यदात्मको भगवान् क्रियात्मको भगवान् ज्ञा-
नात्मको भगवान्" इति नैरुक्तश्रुत्यैव सिद्धम्। इद शुद्धसत्त्वं
द्रव्यरूपाभूषणायुधगोपुरमण्डपादीनामुपलक्षणम्। तस्य शुद्धस-
त्त्वद्रव्यरूपस्य भगवत्स्थानस्य दर्शने "रम्याणि कामचारीणि
विमानानि सभास्तथा। आक्रीडा विविधा राजन्पद्मन्यश्चाम-
लोदकाः। एते वै निरयास्तात स्थानस्य परमात्मनः। आ ब्र-
ह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुन-
र्जन्म न विद्यते" इत्यादिप्रमाणानुसारेण चतुर्मुखभुवनादीनां
निरयत्वप्रतिपादनेन इदमत्यन्तभोग्यतया परमपदमिति प्रति-
पाद्यते अनुकूलस्वभावतया आनन्दमयमित्यभिधीयते षा-
ड्गुण्यप्रकाशनतया षाड्गुण्यमिति निगद्यते पञ्चोपनिषन्मन्त्रप्रति-
पाद्यतया पञ्चोपनिषन्मयमिति कथ्यते अव्याकृतपञ्चशक्ति-
मयतया पञ्चशक्तिमयमिति प्रपञ्च्यते। इयं विमूर्तिर्निरूप-
विग्रहभूषणायुधविमानमण्डपगोपुरादिप्रचुरतया नित्यविभूति-
रित्यभिधीयते। ईश्वरस्य च नित्यानां च नित्यनिग्रहात्तत्तद्वता-

रविग्रहाश्च सन्ति । मुक्तानां पुनरीश्वरेच्छानुगुण्येन स्वेच्छया विग्रहादिपरिग्रहो मातृपित्रादिसृष्टिरपि भवति । अत्र "स एकधा भवति । अशरीरितया भवति । स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा इमाल्लोकान्कामान्नी-कामरूपीत्यनुसञ्चरन्" इत्यादिकं प्रमाणसहस्रमनुसन्धेयम् । एतेषां मुक्तानां विग्रहादिपरिग्रहादिकं सर्वमपि वसन्तोत्सवे पौरपरिग्रहादिवत्स्वामिनः कैङ्कर्यमेव । अस्यां च नित्यविभूतावाकाशादिवैषम्यं नित्यसिद्धशब्दादिगुणवैषम्येण प्रसिध्यति । त्रिगुणं संसारिजीवानां बद्धस्थानतया परमपदादर्वागतित्व(मानन्त्य)मश्नुते । शुद्धसत्त्वं तेषां पुनर्मुक्तिस्थानतया प्रधानस्योपर्यानन्त्यमश्नुत इति विभागः ॥

प्रकृतिमथ च कालं प्राप्यभूतिं मुरारे-
रिति किल कथयित्वा जीवतत्त्वं परस्तात् ।
कथयति वरदार्यो वादसन्नाहलीला-
समितिषु जितकाशी सर्वतन्त्रस्वतन्त्रः ॥

इति श्रीकवितार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनामापरनाम्ना वेदान्ताचार्ये(र्येण) विरचितग्रन्थेषु तत्त्वत्रयचूलिकाया(!)मनात्मनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥

---

भोक्तृत्वभोग्यत्वनियन्तृभावैः
श्रुत्याद्यि(त्या वि)भिन्नेऽपि च तत्त्ववर्गे ।
ईशोऽहमित्यादिमृषाकथान्धान्
प्रतिक्षिपामः प्रतिपत्तिमूढान् ॥

अत्र तावदध्यात्मविद्भिश्चिदचिदीश्वरात्मके तत्त्वत्रये

निरूपणीये पामरपरीक्षकाद्यविशेषेण प्रत्यक्षादिप्रमाणसिद्धं देहादिरूपेण परिणतं भोग्यत्वेनावस्थितमचिद्वस्तु प्रथमं निरूपणीयम् निरूपितं चैतत् । अतः परं भोग्यभूतस्याचिद्वस्तुनो भोक्ता सर्वान्तर्यामिणश्च भगवतोऽचेतनवच्छरीरभूतः पामरप्रसिद्ध्यभावेपि परीक्षकंमन्यानां निरीश्वरमीमांसकानामन्येषामपि तादृशानां प्रसिद्धो जीवो निरूप्यते । पश्चात्पुनश्चेतनाचेतनशरीरी केवलवेदान्तमात्रप्रसिद्धो मुमुक्षुभिरवश्यं वेदनीयो निखिलहेयप्रत्यनीकतया कल्याणगुणगणैकतानतया स्वेतरसमस्तवस्तुविलक्षणः परमपुरुषः प्रतिपादयिष्यते । अचेतनानन्तरं चेतननिरूपणं तदनन्तरं च परमात्मनिरूपणमिति समीचीनेयं सङ्गतिः । अयं च क्रमो ब्रह्मविद्वाक्यप्रसिद्धः ॥ "घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् । सततं मन्थयितव्यं मनसा मन्थानदण्डेन" । अत्र भूतशब्देन देहेन्द्रियादिरूपेण परिणताचिदाधारो जीव उच्यते । विज्ञानशब्देन "सत्यं ज्ञानम्"इत्यादिवत्सर्वान्तर्यामी परमपुरुष उच्यते । तथा च यथाक्रमः क्षीरं दुग्ध्वा नवनीतं मथनीयमेवमेव देहान्तीवा(बिद्वान्तरा)त्मान विविच्य तदन्तर्यामी परमात्मा विवेचनीय इति वाक्यार्थः । अत्र दृष्टान्तान्तरमपि श्रुत्यन्तरोक्तं द्रष्टव्यम् । "यथा प्रयोग्य आचरणे युक्तः एवमेवास्मिन् शरीरे प्राणो युक्तः"इति । आचरणे रथे प्रयोग्यस्तुरगः सारथिना यथा बद्धो भवति एवमेवाचेतनात्मके "आत्मानं रथिनं विद्धि शरीरं रथमेव च"इति रथत्वेन निरूपिते शरीरे मनीषिणां मायातिलङ्घने मनोरथसारथिना भगवता गुणत्रये निबद्धः प्राणो जीवः प्रग्रहरूपैर्ज्ञानशक्त्यादिभिर्भगवद्गुणैः परिगृहीत इति श्रुत्यर्थः । तथा च रथरूपं देहं बुध्वा तन्निबद्धं जीवात्मानमवबुध्य तदुभयनियन्तारं परमात्मानं

योपपत्ते(!)रिति श्रीमद्भाष्यविदां प्रक्रिया ॥ जीवो नामाणुत्वज्ञानाऽऽनन्दादिविशिष्टश्चेतनः । एतस्य कर्तृत्वादिभिस्त्रिविधैव चे(धे)भ्योऽचेतनेभ्यो वैषम्यवदाधेयत्वविधेयत्वशेषत्वादिभिरीश्वरादपि वैषम्यमस्ति । एतस्य कर्तृत्वाभावे कैङ्कर्यस्याप्यसिद्धिः भोक्तृत्वाभावे भोगमात्रमप्यसिद्धम् । तथा च स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वप्रहाणेन पराधीनकर्तृत्वभोक्तृत्वादिकमस्माभिरिह आद्रियन्ते ॥ अचिद्वस्तुनो महदादिरूपेण परिणामवत् जीवस्य धर्मभूतज्ञाने सङ्कोचविकासादिकमीश्वरस्य नित्यानां मुक्तानां च धर्मभूतज्ञाने सङ्कल्पाद्यवस्थान्तरमपि त[त्त]त्प्रमाणप्रसिद्धतया व्यवस्थितप्रकारेणावसितम् ॥ तत्रापि व्यापाराः सर्वेऽपि परबुद्ध्यधीनाः । ईश्वरव्यापाराः सर्वेऽप्येवमेव स्वबुद्ध्यधीनाः । जीवव्यापारेषु केचित्परबुद्ध्यधीनाः । केचित्स्वबुद्धिपरबुद्ध्यधीनाः ॥ अयमपरो विभागः । त्रिविधमप्यचेतनद्रव्यं शरीरमेव भवति । ईश्वरस्तु शरीर्येव भवति । जीवस्तु शरीरी शरीरमपि भवति ॥ अस्य च प्रकारो "देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी" इत्यात्मसिद्धौ श्रीमद्यामुनाचार्यैरुपपादितः ॥ देहस्योपचयापचययोगात् पाणिपादादिभेदेन विभागवत्त्वात् भूतेषु तत्तदवयवेष्ववयवसमुदायेषु च चैतन्याङ्गीकारे तदनङ्गीकारे चानेकचेतनोपलम्भादकारणकार्योत्पत्तिप्रसङ्गात् मम शरीरमित्याद्यबाधितव्यतिरेकनिर्देशाच्चात्मनो देहादिवैलक्षण्यं प्रसिद्धमेव । "पुमान्नदेवः(!)। पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः । नाहं देहः । अच्छेद्योऽयम् । अव्यक्तोऽयम्" इत्यादिकमनुसन्धेयम् । एवमिन्द्रियवैलक्षण्यमप्यनुसन्धेयम् । तत्र तावत्कर्मेन्द्रियाणामन्योन्यव्यापारसङ्कराभावेऽपि करचरणादिसर्वव्यापारकर्ता

जीवः कर्मेन्द्रियविलक्षण इति सुप्रसिद्धः । एवं ज्ञानेन्द्रियाणां विषयविशेषनियमेन प्रवृत्तिमत्त्वेऽपि दर्शनस्पर्शनाभ्याम् "एकार्थग्रहणात्" इत्युक्तप्रकारेण एकस्यैव प्रतिसन्धातृत्वस्य दर्शनात् श्रोत्रादिभ्योऽपि व्यतिरिक्तत्वमात्मनो गम्यते । ज्ञातृभूतस्यात्मनः स्मृत्याद्यधिकरणतयैव सिद्धत्वात् मनसोऽपि वैधर्म्यमात्मनः सिद्धमेव । देहादिष्वभिहितादिभिरेव युक्तिभिरस्यात्मनः प्राणादिभ्यश्च भेदः सिद्ध्यति । धर्मभूतज्ञानस्य स्वयंप्रकाशत्वे सत्यपि जानाम्यहमित्यादिना ज्ञातृधर्मत्वेनैव प्रतिभासमानादहमिति स्वस्मै भासमानस्य ज्ञातुरात्मनस्तस्मादपि वैधर्म्यं स्वरूपनिरूपकाणां सुप्रसिद्धमेव । क्षेत्रज्ञानां धर्मभूतज्ञानस्य प्रत्यक्षादिप्रमाणभेदात् प्रत्यक्षत्वे चक्षुरादिकरणभेदादिच्छाद्वेषसङ्कल्पप्रयत्नसुखदुःखसंशयविपर्ययादिभेदाच्च बहुविधा विकाराः सन्ति । आत्मस्वरूपे तु तादृशविकारजाताभावेनाहमित्यवभासमानत्वमिदं स्वस्मै स्वयंप्रकाशत्वमस्ति । ज्ञातृत्वं ज्ञानत्वं ज्ञेयत्वमप्यस्तीत्यर्थः । अयमत्र विभागः । जडरूपा देहादयः परत एव परस्मा एव भासन्ते । धर्मभूतज्ञानं नित्यविभूतिश्च परतः स्वतश्च परस्मै एव भासते । आत्मभेदेन द्रष्टृभेदोऽप्यस्त्येव । अतीतानागतस्वगतधर्मभूतज्ञानस्य स्वगतवर्तमानधर्मभूतज्ञानेन प्रतिभासनात् परतो भासनमप्युपपद्यते । तथा स्वस्याभेदापेक्षया न द्रष्टृभेदापेक्षया । ज्ञानद्रष्टृस्वैकत्वात् । आत्मा स्वतः परतस्त्वं स्वस्मै भासते न परतः परस्मा एव भासते(!) । एवं मम शरीरमित्यादिव्यतिरेकप्रत्ययात् नित्यनिर्दोषशास्त्र दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादियुक्तिभिश्च आत्मनो देहादिविलक्षणत्वं सिद्धमेव ॥ अनन्यसाधन इति धर्मभूतज्ञानवत् आत्मस्वरूपमपि स्वयंप्रकाश इत्यर्थः । एतेनैव ज्ञा-

तुरात्मनो ज्ञानस्वरूपवादानां विरोधः परिहृतः । धर्मभूतज्ञानं विषयग्रहणकाले स्वाश्रयस्य स्वयंप्रकाशं भवति । आत्मा तु नित्यमेव स्वस्य स्वयंप्रकाशः । अहमहमिति सर्वदा भासनात् ॥ नित्य इति पर्यायेण देवतिर्यङ्मनुष्याद्यनेकजन्मसद्भावेऽपि एकस्मिन्नेव जन्मनि सुषुप्तिजागराद्यवस्थाभेदेन ज्ञानसंकोचविकासवत्त्वेऽपि आत्मस्वरूपे नामान्तरभजनार्हावस्थान्तरप्रसङ्गो नास्तीत्यर्थः । एतस्यात्मनः पूर्वानुभूतप्रतिसन्धानात्स्थिरत्वं तावत्प्रत्यक्षसिद्धम् । सद्यो जातस्य बालस्य स्तनन्धयस्यापि प्रथमं स्तन्याभिलाषादिसद्भावात्स्वभावाच्छरीरान्तरपरिग्रहोऽपि सिद्धो भवति । नित्यनैमित्तिकप्राकृतिकात्यन्तिकप्रलयादिष्वपि आत्मनाशाभावः श्रुतिस्मृतीतिहासपुराणेषु तात्पर्यलिङ्गभूयस्त्वेनावधार्यते ॥ अणुभूतस्यापि जीवस्य व्यापित्वकथनम् "दारुण्यग्निस्तिले तैलं यथा तद्वत्पुमानपि" इत्युक्तरीत्या सौक्ष्म्यातिशयात् सर्वाचेतनान्तःप्रवेशसामर्थ्यप्रतिपादनपरम् । अन्यथाणुत्वप्रतिपादकबहुश्रुतिस्मृतिविरोधात् । मुक्तावस्थायां बद्धावस्थायां च योगप्रभावादनेकशरीरपरिग्रहे च जीवानाम् "एषोऽणुरात्मा चेतसा वेदितव्यः । आराग्रमात्रो ह्यवरोऽपि दृष्टः । वालाग्रशतभागस्य शतधा कल्पितस्य च जीवो भागः स विज्ञेयः स चानन्त्याय कल्पते" इत्यादिश्रुत्यानुगुण्येनाणुत्वे सत्यपि "प्रदीपवदावेशः" इत्यादिसूत्रोक्तप्रक्रियया धर्मभूतज्ञानव्याप्तिप्रणालिका सर्वमपि संघटते ॥ प्रतिक्षेत्रमात्मा भिन्न इति तु ज्ञानसुखादिव्यवस्थादर्शनात् स्वपरशरीरेषु परस्परप्रतिसन्धानाभावे विचित्रफलभोक्तारो जीवात्मानः परस्परं भिद्यन्त इत्यर्थः ॥ स्वतः सुखीति स्वरूपेण स्वस्य नित्यानुकूलत्वं शरीर(सुखित्वा)त्परिपूर्णभगवदनुभवे सर्वात्मना स्वरूपयोग्यत्वमप्यभिधीयते । एवं स्वाभाविकसुखित्वयोग्यस्यापि जीवस्य

कर्मोपाधिवशाद्दुःखित्वमपि भवति ॥ एते जीवात्मानो बद्धा ब-न्धरहिताश्चेति द्विविधा भवन्ति। बन्धरहिताश्च नित्या मुक्ताश्चेति परस्परं विभज्यन्ते। अत्र बद्धा नाम बीजाङ्कुरन्यायेन नियमप्रवाहतया अनादिकालप्रवृत्ताविद्याकर्मवासनारुचिप्रकृतिसंबन्धैश्च-क्रवत्परिवर्तमाना गर्भजन्मबाल्ययौवनजाग्रत्स्वप्नसुषुप्तिमूर्छाज-रामरणस्वर्गनरकादिविविधविचित्रावस्थावन्तोऽनाद्यनन्तप्रकारा अतिदुःसहतापत्रयाभिनप्ताः स्वतःप्राप्तभगवदनुभवादिवि-च्छेदवन्तश्चेतना बद्धाः। तेषामेव कर्मपरतन्त्राणां करणायत्तज्ञा-नानां बद्धानां शास्त्रवश्यत्वाधिकमस्ति। एतेष्वेव बद्धेषु कदाचि-त्सर्वसमरूपस्य सर्वेश्वरस्यावसरप्रतीक्षारूपया सहजया कृपया संसारमार्गात्परिहृत्यादृष्ट्यामुरव्यादीनात्मगुणानुत्पाद्य "अभिन-नविद्यासमुदितम्" इत्यादिप्रमाणेन प्रसिद्धं सदाचार्यमाश्रित्य भ-गवच्छेषत्वरूपं महानिधिं भक्तिसिद्धाञ्जनाञ्जितेन शास्त्रचक्षुषा-तिनिपुणमुपलभ्य स्वाधिकारानुगुणोपायविशेषपरिग्रहेण प्रस-न्नहृदयस्य सर्वेश्वरस्य संकल्पविशेषादत्यन्तनिवृत्तसंसाराः क-लुषजलधिकल्लोलमालोल्लसितकौस्तुभन्यायेनासंकुचितप्रकाशाः परमपुरुषहृदयङ्गमाः नित्यसूरिवदनवरतानिशयभोग्यमूर्तिनिरुपाधि-कैङ्कर्यवन्तः सन्तो मुक्ता इत्युच्यन्ते। "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः(?)" इत्यादिप्रमाणजातमनुसन्धेयम्। नित्या नाम कदाचिदपि भगवदनभिमतविरुद्धाचरणाभावेन ज्ञानसंको-चप्रसङ्गरहिताः सदादर्शनेन परमपुरुषस्य भगवतो वैकुण्ठनाथस्य सेवाभिवादिनोऽनन्तगरुडविष्वक्सेनादयो नियतमकुण्ठशक्तयो वै-कुण्ठवैमानिकाः। एषां पुनरनन्तादीनामधिकारि(र)विशेषा ईश्वरस्य नित्येच्छयैवानादित्वेन व्यवस्थिताः। तेषां नित्यानां मुक्तानामी-श्वरस्य व्यापारवैविध्ये सत्यपि विभूतिद्वयविशिष्टस्य भगवत एव

सर्वेषां(षो)भगवान् "भोगमात्रसाम्यलिङ्गाच्च" इति सूत्रोक्तप्रक्रियया भोगमात्रं समानमेव ॥

भवपदपरिश्रान्त्यानश्रान्तचोभसमुद्भवा-
न(द)धिगतपरब्रह्मानन्दानकारणनिर्मलान् ।
निरवधिमुदितान् जीवांस्तस्यं यतीश्वरवैखरी-
निपुणमनसः पश्यन्त्येतानकृत्रिमबुद्धयः ॥

इति श्रीवेदान्ताचार्येण विरचिते भगवच्चूलिके(!) जीवनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

श्रुतिभिरधिगमाद्धि शुद्धसत्त्वाधिवासी
सरसगुणगणैतैः पञ्चभिः स्वप्रकाशैः ।
शिथिलयति जनानां संसृतिं श्रीनिवासः
शरणवरणवाणीपारतन्त्र्यात्स्वतन्त्रः ॥ १ ॥

ईश्वरो नाम "स्वाधीनत्रिविधचेतनाचेतन" इत्यादिप्रकारेण पूर्वोक्तचेतनाचेतनयोर्नियमेन धारकत्वनियन्तृत्वशेषित्वयोगात्सर्वशरीरी सर्वकार्यकारणभूतः सर्वज्ञत्वसर्वशक्तित्वाद्यनन्तकल्याणगुणाश्रयतया स्वेतरसमस्तवस्तुविलक्षणः निष्कर्मकेतरसमस्तानुष्ठाप्यः सर्वसाक्षी सर्वकर्मसमाराध्यः सकलफलप्रदः सर्वेषामात्मनां स्वाभाविकसौहार्दः सुगमो मुमुक्षूणामाश्रयभूतो मुक्तप्राप्यः सर्वप्रकारनिरतिशयभोग्यो निखिलवेदान्तवेद्यः श्रियः पतिः श्रीपुरुषोत्तमः। अत्रोक्तानि व्यधिकरणानि समानाधिकरणानि च सर्वाण्यपि विशेषणानि चेतनाचेतनव्यावर्तकतया भगवतो लक्षणानि । अयं च भगवान्नारायणः सूक्ष्मचिदचिद्वस्तुविशिष्टविशेषेण जगदुपादानं भवति । स्वसंकल्पविशिष्टवेषेण स एव निमित्तमपि भवति । अयमेव महदादीनामुपादा-

मानां हिरण्यगर्भादीनां निमित्तानामन्तर्यामित्वेनावस्थितः तत्कार्येष्वप्युपादाने निमित्तं च भवति । अयमेव सहकारिभूत-कालाद्यन्तर्यामितया सहकारिभावमप्यनुभवति । अतस्त्रिविधकारणं ब्रह्मैवेति त्रय्यन्तवादिनः । तथा श्रुतिः "किं स्विद्वनं क उ स वृक्षः आसीद्यतो द्यावापृथिवी निष्टतक्षुर्मनीषिणो मनसा पृच्छते यदतिष्ठद्भुवनानि धारयत्" इति पृष्ट्वा उत्तरत्वेन "ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुर्मनीषिणो मनसा विभ्रवीमि वः ब्रह्माध्यतिष्ठद्भुवनानि धारयत्" इति । ब्रह्मणो निमित्तत्वमङ्गीकृत्य विश्वस्य किमुपादानं पुनरुपकरणमिति पृष्ट्वा ब्रह्मैव सर्वोपकरणसर्वोपादानान्तर्यामित्वेन स्वयमेव विश्वोपादान-मुपकरणं चेति निर्धार्यते । एतस्य भगवतो विभुत्वे सति चेतनत्व-मनन्याधीनत्वं निराधारत्वमित्यादिलक्षणानि भवन्ति । लक्षणं नाम सजातीयविजातीयव्यावर्तको धर्म इति हि लक्षण-विदः । अस्य भगवतः सत्यत्वज्ञानत्वानन्दत्वानन्तत्वामलत्वा-दयः सर्वविद्यानुवृत्ताः स्वरूपनिरूपकधर्माः । उक्तं हि सूत्र-कारैः "आनन्दादयः प्रधानस्य" इति । ज्ञानबलादयस्तु भगवतो निरूपितस्वरूपविशेषकधर्माः । एवं तद्विशिष्टगताः सौशील्या-दिधर्माः । उक्तं हि सर्वेषामनन्तानां गुणानां षाड्गुण्यविततिरू-पत्वम् "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । यैस्त्वयैव जगत्कुक्षावन्ये त्वन्तर्निवेशिताः" इति । एतेषां गुणानां लक्षणमु-पयोगश्च विविच्य शास्त्रेषु द्रष्टव्यः । एतस्य भगवतः सर्वजगत्सृष्टिस्थितिसंहारनिग्रहानुग्रहाः प्राधान्येन कर्तव्याः । अयं च भगवान् ज्ञानशक्त्यादिविशिष्टवेषेण सर्वान्तर्यामी भवति ॥ अस्त्रभूषणाध्यायप्रक्रियया सर्वतत्त्वाश्रयदिव्यमङ्गलविग्रहविशिष्टवेषेण परव्यूहादिपञ्चप्रकारतयावतिष्ठते ॥ पररूपं नाम "निरस्

नित्याकृतिधरम्। नित्यसिद्धैस्तदाकारैस्तत्परत्वे च पौष्करे" इत्यादिषु प्रमाणेषु सिद्धं सूरिभिर्मुक्तैश्च सेव्यं परमपदनिलयं दिव्यरूपम् । इत्थं किल परूरूपमनुसन्धेयतयाभिहितमाचार्यैः "सव्यं पादं प्रसार्याश्रितदुरितहरं दक्षिणं कुञ्चयित्वा जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय । पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे देवीभूषादिजुष्टो वितरतु भवतां शर्म वैकुण्ठनाथः" । शान्तोदितदशाविभागो द्रष्टव्यः । अस्त्रभूषणविभागे मदीयं पद्यमनुसन्धेयम् "चित्पश्यकृति चेतनास्थिरमतिस्तत्संहृतिर्मालिका भूतानि स्वगुणैरहंकृतियुगं शङ्खेन शार्ङ्गार्पिते । बाणाः खानि दृशापि कौस्तुभमणिर्जीवः प्रधानं पुनः श्रीवत्सं कमलापते तव गदामाहुर्महान्तं बुधाः" ॥ व्यूहो नाम परूरूप(पांव)वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपेण जायमानो विभागविशेषः । एतेषां चतुर्णामपि कृतत्रेतादियुगभेदेन सितरक्तपीतकृष्णवर्णाः परिदृश्य भवन्ति । अत्र परव्यूहे वासुदेवे च षाड्गुण्यप्रकाशसाम्यात् त्रिव्यूहपक्षोऽपि कचित्कचिदभिधीयते । संकर्षणादिषु त्रिव्यूहेषु द्वौ द्वौ गुणावभिव्यज्येते । ज्ञानबलाभ्यां संकर्षणः । ऐश्वर्यवीर्याभ्यां प्रद्युम्नः । शक्तितेजोभ्यामनिरुद्धः । अत्र षाड्गुण्याद्वासुदेवः गुणैः षड्भिजन्मिस्त्वमुमुक्षुसिद्धर्यैप्राप्यतया ध्यातक्रमवदुपास्यः । "स्वामिन् तत्तत्सहकारिवर्गैश्चातुर्व्यूहं वहसि चतुर्द्धा" इत्यादिश्लोका अनुसन्धेयाः । एतेषु चतुर्व्यूहरूपेषु प्रत्येकं त्रयस्त्रयोवतीर्णाः केशवादयो व्यूहान्तराणि । एते च केशवादयो मार्गशीर्षप्रभृतीनां द्वादशमासानां द्वादशादित्यादीनां चाधिदैवतानि । ऊर्ध्वपुण्ड्रेषु तेषु तेष्वषस्थानं विशिष्यते । एतच्च द्वादशनामपञ्जरेषु स्वयमेव द्रष्टव्यम् ॥ विभवाः पुनर्व्यूहदशाविर्भूताः पद्मनाभादयः । षड्विंशद्वतारेषु

धामनत्रिविक्रमवदाविर्भूतान्यवतारान्तराणि विभवान्तराणि कपिलादिसंज्ञानि। काकुत्स्थः साक्षाद्भगवदवतारः कपिलादीननुप्रविश्य तेषामतिशयमाविर्भावयति। "कृष्णरूपाण्यसङ्ख्येयानि" इत्युक्तप्रकारेणैकैकावतारेषु अवतारभेदाः सहस्रशोऽपि सन्ति॥ अन्तर्यामिरूपं तु "नीलतोयदमध्यस्था वि(द्वि)द्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीताभास्त्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इति योगिभिर्द्रष्टव्यत्वेन हृदयप्रदेशावस्थितरूपान्तरम्॥ अर्चावतारस्तु परव्यूहादिविलक्षणैः सह स्वयं व्यक्तार्षदिव्यमानुषादिप्रक्रियया देशकालस्वभावविप्रकर्षाभावेन मांसचक्षुषामप्यनुभवितुं योग्यमवतारान्तरम्। अत्र "यथा युवाना(न)प्र राजाना(न)प्र। सर्वातिशायिपाद्गुण्यम्। अर्चा सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः" इति प्रमाणजातम्। अभिमानसंस्कारपरिणामानुप्रवेशाभिमुख्यादिकार्यं च प्रमाणानुसारादवगन्तव्यम्। एतेषु परव्यूहविभवान्तर्याम्यर्चावतारादिसर्वावस्थान्तरेषु "श्रीनिवासे परब्रह्मणि" इति भगवता भाष्यकारेण निर्दिष्टः सर्वशरण्यः सर्वेश्वरः "श्रीवत्सवक्षा नित्यश्रीः। नित्यानपायिनी शान्तानन्त(?)विष्णोः श्रीरनपायिनी। अनन्या राघवेणाहं भास्करेण प्रभा यथा। अनन्या च मया सीता भास्करेण प्रभा यथा। लक्ष्म्या सह हृषीकेशः श्रिया सार्द्धं जगत्पतिः" इत्याद्युक्तप्रकारेण स्वाभिमतानुरूपसहधर्मचारिणीश्लेषविशिष्टतया अध्यात्मविद्भिरभिधीयते। अनेनैकायनकुदृष्ट्यादेरनवकाशः। एवं परादिस्थानविशेषाः भुजवर्णनिभूषणायुधदेवीपरिजनपरिच्छदादिविशेषाश्च श्रीपञ्चरात्रतन्त्रेषु तत्संग्रहेषु अन्येषु विशेषतो द्रष्टव्याः। एवं विविधविग्रहविशिष्टवेषेण भगवतः शुभाश्रयत्वं सर्वास्वप्यवस्थास्वनुवर्तते।

षड्विंशतिमूर्तीनामप्युक्तेष्वन्तर्भावान्न पृथगभिधानम् । हिरण्यगर्भरुद्रादीनां पुनः कासु चिदवस्थासु भगवदावेशे सत्यपि तेषां कर्मवश्यत्वे अशुद्धपरिवारत्वात्प्रतिबुद्धैरनुपास्यत्वम् । "याश्चान्या देवताः स्मृताः । एता बुधा न सेवन्ते यस्मात्परिमितं फलम् । ब्रह्माणं शितिकण्ठं च । न चान्यद्देवताभक्तिम् । नान्यदेवं नमस्कुर्यात्" इति भारतपौष्करादिषु प्रसिद्धम् । प्रतर्दनादिविद्यासु वर्णाश्रमनियतेषु केषु चिद्धर्मेषु इन्द्रादिचेतनान्तरविशिष्टभगवदनुसन्धानस्य(ने) विधिबलप्राप्ते सति तत्तच्चेतनान्तराणि प्राण्यादिवत्कञ्चुकतुल्यत्वेनावस्थानात् विशेष्यभूतपरमात्मन एव(?) । श्राद्धादिषु पितृष्विव अन्येष्वधिकारिरूपासनैकान्त्यभङ्गोपि न विद्यते । न खलु राजभृत्यानां राजाज्ञया अन्नपानादिप्रदाने राजान्तरङ्गस्य जनस्य राजैकान्त्यं विहन्यते । रामकृष्णादिसाक्षादवतारेषु असुरमोहनार्थं कर्मवश्यत्वाभिनयमात्रमेवास्ति । न तु परमार्थतो दुःखादिकम् । एतेन "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इत्यादिकं व्याख्यातम् । "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्तदेहः पुनर्जन्म नैति मामेति सोऽर्जुन" इत्युक्तप्रकारेण शुद्धसृष्टिरूपावतारवेदिनां सहसैवोपायपरिपूर्त्या पुनर्भवादिकं न विद्यते । शुद्धाशुद्धसृष्ट्योरुभयत्रापि कस्यापि कार्यस्य केवलनित्यं केवलानित्यं वा कारणं न भवति । सामग्र्या सर्वकार्योत्पत्तिनियमात् । स्वरूपनित्यानि द्रव्याणि अनित्यानीश्वरसङ्कल्पविशेषादीनि कारणानि सम्भूय कार्यं कुर्वन्ति । एतेषु कारणेषु अनन्याधीनत्वादीश्वरः प्रधानकारणं भवति । अयमीश्वरः स्वव्य(सर्वश)क्तिरिति चेतनाचेतनप्रवृत्तिषु यथायोग्यं प्रेरकः अनुमन्ता सहकारी साक्षी फलप्रदः उदासीनश्च वर्तते । इदं च "एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तदा । अध्यक्ष-

अनुमन्ता च गुणमायासमावृतः" इत्यादिषु उचितव्यवस्थया द्रष्टव्यम्। अत्र सङ्कल्पमात्रेण भगवता क्रियमाणं प्रेरणं शरीरभूतयोश्चेतनाचेतनयोस्तुल्यमेव च। सहजकृपामूलेन गुरूपदेशेन क्रियमाणं प्रेरणं शास्त्रवश्येषु क्षेत्रज्ञेष्वधिकं भवति। एवं सर्वप्रकारविशिष्टतया स्थितः श्रियः पतिर्नारायण एव प्रधानतत्त्वम्। तेन सह शरीरात्मसम्बन्ध(भाव) एव प्रधानसम्बन्धः। तस्यैव भगवत उपायोपेयात्मकमर्थद्वयं प्रधानतया ज्ञातव्यम्। उभयार्थपरिपूर्णनारायणशब्द एव प्रधाननामधेयम्। एतस्मिन्नेव भगवति प्रार्थनापूर्वकभरन्यासः प्रधानमूलसाध्योपायः। भगवदभिमतानुवर्तनमेव प्रधानपुरुषार्थः। एतेषु सत्त्वहितपुरुषार्थेषु ज्ञानविश्वाससत्वरोपजननाय मूलमन्त्रादिमुखेन सम्यगुपदेशं यः करोति स एव प्रधानाचार्यः। सदाचार्योपदेशेन तत्त्वज्ञाने सञ्जाते निषिद्धाद् विरक्तो विषयाभिहतः पतिव्रतानुरागतुल्यभगवत्प्रेमपारकर्मितहृदयश्चोदितेषु कैङ्कर्येषु नित्यनिरतः प्रधानशिष्यः। एतस्याधिकारिणो मुक्तिमूलकारणतत्त्वत्रयविवेकोत्पत्तिप्रकारं क्षीरघृतदृष्टान्तन्यायेन घृतमिवेत्युपनिषद्वाक्यं प्रतिपादयतीति पूर्वमेवोक्तम्। एतच्च द्रविडोपनिषद्वाक्येष्वधीयतेऽध्यात्मविद्भिः। एतत्सर्वं शारीरशास्त्रे तद्विवरणरूपेषु पूर्वाचार्यशास्त्रेषु विशेषतश्च वेदान्ताचार्यैरस्मत्तातपादैरनुवर्णितेषु प्रबन्धेषु विस्तरेण द्रष्टव्यम्। एवंविधेन प्रतिबोधेन स्वभरसमर्पणाधिकारिणः पुनरनुशयप्रसङ्गो नास्ति। एवंविधप्रतिबोधाभावेऽप्येकदेशज्ञानमात्रेणापि भरसमर्पणं कुर्वतामीदृशप्रतिबोधः परमकारुणिकस्य भगवतः प्रसादात्कालेन भविष्यतीति सर्वमनवद्यम्। इदं सर्वमप्यर्थज्ञानं द्रविडदेशवासिनां विशदमवबोधयितुमाचार्यैस्तद्भाषया प्रणीते तत्त्वत्रयचुलुके संग्रहेणाभिहितम्। सकलदेशवासिनामपि विदुषामवग-

भाषास्माभिः संस्कृतभाषया सम्यगुपपादितम् । इवं हि भाचार्यैरभिहितं श्लोकद्वयं तस्मिन्नेव प्रबन्धान्ते "इतीरितो देशिकदत्तचक्षुषा यथाश्रुतं वेङ्कटनाथसूरिणा । अपक्षपातैर्निपुणैर्निपेव्यतामनात्मजीवेश्वरचिन्तनक्रमः ॥१५॥तरलदुरवगाहात्तत्त्वदुग्धाम्बुराशेर्यदमृतमुदहार्षीद्विङ्कटेशो यथावत् । तदिह तुलुकमार्गे साधुभिः सावधानैरपुनरुपनिषेव्यं तत्त्वमास्वादनीयम्॥२॥

अस्मदीयं चैतदनवद्यपद्यं प्रबन्धपरिसमाप्तौ लिख्यते ॥

परिणतगुरुभक्तिः पद्मनाभांघ्रिपद्मं
शरणमुपगतो यः शान्तसिद्धान्तवेदी ।
स हि भवति मुनीनां मुक्तिसौधस्थितानामपि परिषदि मान्यो भाग्यसौभाग्यशाली ॥ १ ॥
घटवगरुरवादीद्रावदूकाग्रयायी
गुरुजनपरतन्त्रः सर्वतन्त्रस्वतन्त्रः ।
चिदचिदधिपतीनां चिन्तनाचक्रमेवस्थणिहितहरिचक्रान् प्रीणयन् प्राणभाजः ॥
चिदचिदीश्वरतत्त्वनिरूपणं
वरदनाथकसूरिनिगुम्फितम् ।
परमपूरुषभक्तिपरायणाः
प्रतिपदं परिपश्यन्तु(त) सूरयः ॥
इति वरदाचार्यकृतं तत्त्वत्रयनिरूपणम् ॥

इति श्रीनिखिलकविताकिकचूडामणिना सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनाथापरनाम्ना वेदान्ताचार्येण निरचितग्रन्थेषु तत्त्वत्रयचुलुकार्थसंग्रहो नाम तृतीयोऽध्यायः(?) समाप्तः ॥

## बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमा कचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्माहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयं । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देयं इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अङ्गरेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १२ | १२ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यम् ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागे प्रथमद्वितीयकाण्डे पुण्यराजटीकासहिते खण्ड ३ । द्वितीयभागे तृतीयकाण्डम् हेलाराजटीकासहितं खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्ड २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुःसर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्ड २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

मायास्माभिः संस्कृतभाषया सम्यगुपपादितम् । इदं हि मा चार्यैरभिहितं श्लोकद्वयं तस्मिन्नेव प्रबन्धान्ते "इतीरितो देशिकदत्तचक्षुषा यथाश्रुतं वेङ्कटनाथसूरिणा । अपक्षपातैर्नि पुणैर्निपेव्यतामनात्मजीवेश्वरचिन्तनक्रमः ॥१.५॥ तरलदुरवगाहा तत्त्वदुग्धाम्बुराशेर्यदमृतमुदहार्षीद्वेङ्कटेशो यथावत् । तदिह चुलु कमात्रं साधुभिः सावधानैरपुनरुपनिषेव्यं तत्त्वमास्वादनीयम् ॥२॥"

अस्मदीयं चैतदनवद्यपद्यं प्रबन्धपरिसमाप्तौ लिख्यते ।

परिणतगुरुभक्तिः पद्मनाभांघ्रिपद्मं
शरणमुपगतो यः शान्तसिद्धान्तवेदी ।
स हि भवति मुनीनां मुक्तिसौधस्थितानाः
मपि परिषदि मान्यो भाग्यसौभाग्यशाली ॥ १ ॥
वरवगुरुवादीद्वावदूकाग्रयायी
गुरुजनपरतन्त्रः सर्वतन्त्रस्वतन्त्रः ।
चिदचिदधिपतीनां चिन्तनाचक्रमेत-
स्मणिहितहरिचक्रान् प्रीणयन् प्राणभाजः ॥
चिदचिदीश्वरतत्त्वनिरूपणं
वरदनायकसूरिनिगुम्फितम् ।
परमपूरुषभक्तिपरायणाः
प्रतिपदं परिपश्यन्तु(त) सूरयः ॥
इति वरदाचार्यकृतं तत्त्वत्रयनिरूपणम् ॥

इति श्रीनिखिलकवितार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनाथापरनाम्ना वेदान्ताचार्येण विरचितग्रन्थेषु तत्त्वत्रयचुलुकार्थसंग्रहो नाम तृतीयोऽध्यायः(?) समाप्तः ॥

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

---

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेज़ीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीत शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्ड २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (वृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| वृत्तदीपिका खण्डानि ४ | ४ | ० |

| | | |
|---|---|---|
| पातञ्जलदर्शनम् श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा । श्रीमदन्नभट्टप्रणीता खण्डानि ६ | ६ | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० ६ | ६ | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिर्विरचिता । | १ | ० |
| दैवज्ञकामधेनु अर्थात् प्राचीनज्योतिषग्रन्थ. खण्डे २ | २ | ० |
| श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि ३ | ३ | ० |
| तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा-तत्त्वत्रयचुलुकसंग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । | १ | ० |

ब्रजभूषण दास और कम्पनी
चांदनीचौक के उत्तर नई सड़क बनारस

